प्रकाशनवर्षम् - 2022-23

ISSN - 2277-6443

# विद्यारश्मिः

सन्दर्भिता समीक्षिता च वार्षिकी राष्ट्रियशोधपत्रिका

Refereed & Peer Reviewed Annual National Research Journal

वेदर्चामर्चयन्तस्स्मृतिचयवचनं तत्त्वतश्चर्चयन्तः
शास्त्रान्तः संस्पृशन्तोऽमृतगतिमतिदं दर्शनं दर्शयन्तः ।
साहित्यं स्वादयन्तस्सहृदयवसतौ भासमुद्भासयन्तो
विद्याया रश्मयो ज्ञान् पिपुरतु सुधियां शेमुषीमेधयन्तः ॥

संरक्षकः
प्रो. श्रीनिवासवरखेडी

प्रधानसम्पादकः
प्रो. लक्ष्मीनिवासपाण्डेयः

सम्पादकः
प्रो. बोधकुमारझाः



केन्द्रीयसंस्कृतविश्वविद्यालयः
(प्राक्तनं राष्ट्रियसंस्कृसंस्थानम्)
(संसदोऽधिनियमेन संस्थापितः,शिक्षामन्त्रालयभारतसर्वकाराधीनः)
क. जे. सोमैयापरिसरः
विद्याविहारः, मुम्बई - ४०० ०७७ (महाराष्ट्रम्)

| | | |
|---|---|---|
| ISSN NO | – | 2277-6443 |
| पत्रिकानाम | – | विद्यारश्मिः |
| प्रकाशकः | – | केन्द्रीयसंस्कृतविश्वविद्यालयः,<br>क. जे. सोमैयापरिसरः, विद्याविहारः (पूर्वः),<br>मुम्बई 400077(महाराष्ट्रम्) । |
| वेबसाइट | – | csu-mumbai.edu.in |
| © | | प्रकाशकाधीनः । |
| प्रकाशनम् | – | फरवरी, 2023 |
| अङ्कः | – | अष्टमाङ्कः |
| अनुवृत्तयः | – | 200 |
| पत्रिकाकारः | – | 7.5 X 9.5 |
| मुद्रकः | – | वन्दना आर्टस्, मिनाक्षी अपार्टमेन्ट, शॉप नं. 3,<br>एल्. बी. एस्. मार्ग, विक्रोळी (प), मुम्बई – 400 079 |

केन्द्रीयसंस्कृतविश्वविद्यालयः

(संसदोऽधिनियमेन संस्थापितः)

(शिक्षामन्त्रालयभारतसर्वकाराधीनः)

क. जे. सोमैयापरिसरः

सुरुचिभवनम्, सोमैयाविद्याविहारः

विद्याविहारः (पू.), मुम्बई - 400 077 (महाराष्ट्रम्)




Central Sanskrit University

(Established by an Act of Parliament)

(Under Ministry of Education, Govt. of India)

K.J.Somaiya Campus

Suruchi Bhawan, Somaiya Vidyavihar,

Vidyavihar (E) Mumbai - 4000 77 (Maharashtra)



## शिवसङ्कल्पमस्तु

ब्रह्माण्डनिर्मातरि तादात्म्येन स्थिता कालाख्यशक्तिर्व्यापिका महती तदधीना एव जन्मादयो भावविकाराः तेषां कालमपेक्ष्यैव व्यवहारसम्भवात् । कार्य्यमात्रम्प्रति कालस्य कारणत्वात् सा कालशक्तिर्यदा जन्मशक्तिमाज्ञापयति तदा पट उत्पद्यते, यदा प्रतिबध्नाति तदा नश्यति, यदा उभयं न करोति तदा तिष्ठति । अथ च, ''कालः समविषमकरः, परिभवसम्मानमानदः कालः । कालः करोति पुरुषं दातारं याचितारञ्चे'' ति रीत्या संस्कृतविद्ययाऽपि कालानुरोधेनैव भाव्यम् ।

त्रिकालदर्शिभिरस्माकमृषिमहर्षिभिः प्रत्यक्षपरोक्षतत्त्वं तत्तच्छास्त्रे निरूपितम् । तदालोच्य विमृश्य निष्कृष्य चोपस्थापनं शेमुषीसम्पन्नैरध्ययनाध्यापनप्रवणैः, अनुसन्धित्सुभिः प्रतिभावद्भिः छात्रैश्च कर्त्तव्यम् । तस्मादेव विद्याया अमुष्याः समसामयिकत्वं प्रासङ्गिकत्वञ्चास्तित्वमेष्यति ।

प्रख्यातस्य केन्द्रीयसंस्कृतविश्वविद्यालयस्य मुम्बईपरिसरेण प्रकाशयिष्यमाणा ''विद्यारश्मिः'' इति राष्ट्रियशोधपत्रिका अष्टमावृत्ता शास्त्रीयतत्त्वानि नूनमेव तथा पुरस्करिष्यति यतः संस्कृतविद्याप्रयुक्तापेक्षापूर्त्तिर्यायादिति नो विश्वासः ।

अत्र येषां विदुषां, गवेषकाणाञ्च लेखाः क्रोडीकृताः तेभ्यः कार्त्तज्ञं प्रकटयामः, साधुवादांश्च वितन्मः सम्पादकमण्डलेभ्यः । अवसरेऽदसीये आदरणीयेभ्यः समीक्षासमितिविद्-वद्भ्यः, मूल्याङ्कनसमितिविद्वद्भ्यश्च तेषामुपकारं स्मारं स्मारमाभारं सामोदमुद्वोढुं चोत्सहामहे । परिसरस्यास्य कल्पोऽयं शिवसङ्कल्पत्वं प्राप्नुयादिति भगवन्तं सिद्धिविनायकं प्रार्थयामहे ।

(प्रो. लक्ष्मीनिवासपाण्डेयः)

# सम्पादकीयम्

सर्वो हानोपादानव्यवहारकर्त्ता नरो ज्ञानेन्द्रियव्यापारैः पूर्वं वस्तु गोचरीकृत्य, पुनश्च ''इदमेवं नैवं वे''ति मनसा गुणदोषौ विचार्य्य, पुनः ''शक्तोऽहं खल्वेतन्निष्पादने'' इत्येवमभिमत्य ''कर्त्तव्यमिदमि''त्यध्यवस्यति, ततश्च प्रवर्त्तत इति कश्चन क्रमः । सरणिमेतामेवानुसृत्य शोधका अपि स्वां लेखनीं व्यापारयन्तीति नापरोक्षं प्रेक्षावताम् ।

एकादशाधिकद्विसहस्रतमाब्दात् प्रभृति प्राक्तनराष्ट्रियसंस्कृतसंस्थानस्येदानीन्तनस्य केन्द्रीय-संस्कृतविश्वविद्यालयस्य, क. जे. सोमैयापरिसरो मुम्बईस्थितो ''विद्यारश्मिः'' इति नाम्ना समीक्षितां सन्दर्भिताञ्च वार्षिकीं राष्ट्रियशोधपत्रिकां प्रतिवर्षं प्रकाशयति, किन्तु विश्वस्मिन् विश्वे सम्प्रति घनघोरातङ्कपर्य्यायीभूतः कोरोनारोगाणुः प्रकाशनप्रवाहेऽमुष्मिन् किञ्चित् प्रत्यबध्नात् । हेतोर-स्मादैषमो विद्यारश्मेः अष्टमाङ्कमेव परिषेवते परिसरस्तत्रभवताम्भवताम्पुरस्तात् । संस्कृतहिन्दी-मराठ्याङ्ग्लेति भाषाचतुष्टय्या विद्योपासनाप्रसादमासादयन्त्यां पत्रिकायाममुष्यामाभारतं ख्यातिङ्गतानां सारस्वतानुष्ठानिनां मौलिकचिन्तनप्रवणानां गवेषणधिषणानामाचार्य्याणां, परिसरीयानुसन्धित्सूनां प्रगल्भानां शुश्रूषासम्पन्नानाञ्चाष्टादश शोधपत्राण्यत्रावेशितानि विद्यावैभवं सन्तन्वन्ति । तदिमानि सर्वाणि विद्वत्त्रय्या समीक्षितानि, तदनुशंसामवाप्य सम्पादकमण्डलसदस्यैः श्रमक्रमाभ्यां सम्पाद्या-स्वादयितुमाविष्क्रियन्ते ।

विश्वविद्यालयस्यास्य कौलपत्यमलयतां प्रो. श्रीनिवासवरखेडीमहोदयानां संरक्षकाणाम्, परिसरस्य निदेशकानां प्रो. लक्ष्मीनिवासपाण्डेयमहाभागानां प्रधानसम्पादकानामनुकम्पया, प्रत्तशोध-पत्राणामाचार्य्याणां मेधाविनामनुसन्धानधनानामन्तेवासिनाञ्च तपश्चर्य्यया, मुम्बादेवीसहितसिद्धि-विनायकाकारणकरुणया च पत्रिकामिमां सम्पादयितुमधिगतसामर्थ्यं सम्पादकमण्डलमिदं तेभ्यः सकलेभ्यः सकलेभ्य आभारमनुभवति, अत्रत्यदोषाय समवहितचित्तेनाप्यपरिहृताय सोढुं भवतामौदार्य्यं स्मरति, तोषयति चात्मानं क्षुद्रेणानेन प्रयत्नेनेति ।

सम्पादकमण्डलम्

# शोधपत्रानुक्रमणिका





# रससूत्रव्याख्याने पण्डितराजस्य योगदानम्

✍प्रो. राजन्. ई. एम्.

**(पण्डितराजस्य रससूत्रव्याख्यानमाश्रित्य तदीयं योगदानं किमिति विचारपरोऽयं निबन्धः कतिपयं रस-सम्बन्धिरहस्यमुद्घाटयितुं क्षमः । रसास्वादः ब्रह्मास्वादसमः, अपि च साहित्यस्यापि दर्शनत्वमिति मनसि कृत्य पण्डितराजः सूत्रमिदं व्याख्यातीति निपुणमत्र प्रतिपादितम् । एतद्व्याख्यानेऽभिनवगुप्तभट्टनायकमते धीरधिषणया परिशीलिते, नव्यमतेषु च सम्भावना उद्भाविताः - इत्येतद्द्वयं जगन्नाथस्यात्र विशिष्टयोग-दानत्वेन निरूपितम् ।)**

विभावाऽनुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति[1] नाट्यशास्त्रस्थं भरतमुने रसरसूत्रम् । एतत् बहुभिः व्याख्यायि । तेषु मुख्या लोल्लट-शङ्कुक-भट्टनायकाऽभिनवगुप्ताः । अन्ये केचन नव्यत्वेन परामृष्टाः पण्डित-राजेन । एतेषां व्याख्यानेन पण्डितराजः स्वीयं योगदानं प्रास्तुवत् । तदत्र संक्षेपेण प्रतिपाद्यते ।

रसास्वादः ब्रह्मास्वादसहोदर (सदृशः) इति प्रायेणलंकारिणां राद्धान्तः । अपि चाऽऽस्तिकदर्शनेषु साहित्य-स्यापि गणनोचितेति पण्डितराजः । एतदुभयं मनसि कृत्यैव रससूत्रं व्याचाख्यौ । एतदर्थमादौ पण्डितराजः अभिनवगुप्ताचार्यस्य रससूत्रव्याख्यानं स्वीचकाराद्वैतमतञ्चोपनिबबन्ध । यद्यप्यभिनवगुप्ताचार्यः नाट्यशास्त्राभिनवभारत्यां व्याख्यायां साहित्यास्तिकतां सूचयन्नाह - **आम्नायसिद्धे किमपूर्वमेतत् ।**

**संविद्विकासेऽधिगमागमित्वम् ॥**[2] इति ।

किन्तु एतेन रसास्वादसहोदरत्वे न किमपि उक्तोक्तञ्च पण्डितराजेनेति वक्ष्यते । एतदर्थमेव पण्डितराजेन रसनिरूपणेऽद्वैतपथ आश्रितः । यथा लोके आत्मनि अज्ञानावरणमस्तीति तत्तत्प्राणिनिष्ठरत्यादिः परिच्छिन्नत्वाऽ-साधारणत्वादिविशिष्टः प्रकाशत इति करुणे दुःखित्वादि, भये पलायनादि, क्रोधे वधबन्धनादि उपजायते, नास्वाद-लवोऽपि । किन्तु काव्येऽलौकिकेन भावनाख्यव्यापारमहिम्नाऽऽवरणभङ्गो जायत रत्यादिः - अपरिच्छिन्नत्व-साधारणत्वादिधर्मपुरस्कृतो भवति । एवंविधो रत्यादिः लौकिकात्कालदेशादिभ्यो निर्मुक्तस्तदा तं स्वदते सहृदयः स रत्यादिरेव रसशब्देन व्यपदिश्यते । पण्डितराजोऽत्र दृष्टान्तयति यथा शरावादिना पिहितो दीपस्तन्निवृत्तौ सन्निहितान् प्रकाशयति स्वयं प्रकाशते च ।[3] एवं प्रतिपाद्यैष आचार्यः को रस इति वदन् यथा -

व्यक्तस्स तैर्विभावाद्यैः स्थायी भावो रसः स्मृत[4] इति मम्मटवाक्यायनुसारण चिदवच्छिन्नो रत्यादिरेव रसोऽत्र रति विशेष्यतया चिद्विशेषणतया भासते । किन्तु 'रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवतीति'[5] श्रुत्यनुसारेण रत्याद्यवच्छिन्ना चिदेव रसोऽत्र, चिद्विशेष्या रत्यादिर्विशेषणम् । एवञ्च ब्रह्मास्वादसहोदरत्वं सूचितं

पण्डितेन – कथमिति चेद्ब्रह्मास्वादे ब्रह्मैव केवलं रसास्वादे आत्मना सह रत्यादिविषयः भासते । उभयत्रापि ब्रह्मविषयकत्वमस्ति ॥

आचार्यभट्टनायकस्य भक्तिवादस्स्वीकृतः पण्डितराजेन परन्तत्र साधारणीकरणप्रक्रियायामपूर्वकल्पना कृता । भट्टनायकस्य मते रसो नोत्पद्यते न प्रतीयते नाभिव्यज्यते । अत्र यथाक्रमं लोल्लटशङ्कुकाऽऽनन्दवर्धनाचार्याणां मत-मुपन्यस्तम् । यद्यपि आनन्दनवर्धनेन रससूत्रव्याख्या नाकारि परं रसेऽभिव्यक्तिरङ्गीक्रियते । भट्टनायकस्येदं हृदयं यद्विभावं विना न रसप्रतीतिर्विभावस्य रसे निमित्तत्वात् । विभावश्चालम्बनं शकुन्तला सा सामाजिकैरगम्येति तस्याः विभावत्वं न स्यात् । तथा च सर्वप्रथमं शकुन्तलादौ विभावत्वं सम्पादनीयमतः विभावतावच्छेदककोटौ 'अप्रामाण्य-निश्चयानालिङ्गिताऽगम्यात्वप्रकारकज्ञानविरहः विशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकस्सन्निवेशनीयः । तादृशज्ञान-विरहः[6] कथं स्यादिति नानाविकल्पान् विचार्यान्ते भावनाव्यापारेण शकुन्तलायाः दुष्यन्तरमणीत्व-देश-काल-व्यक्त्या-द्यवत्रोटनेन शकुन्तलायां गम्यात्वं सम्पाद्यते । अथ विभावादिसम्बन्धेनाविभूतो रत्यादिर्भोगकृत्त्वव्यापारेण भुज्यते ।' एवमत्र रत्यादिभोगो भुज्यमानरत्यादिर्वा रसः । अत्र ब्रह्मास्वादसहोदरत्वं रसास्वादस्य कण्ठतो वक्ति पण्डितराजः यथा 'सोऽयं भोगो विषयसंवलनाद् ब्रह्मास्वादसविधवर्तीत्युच्यते ।[7]' इति ॥

अथ 'नव्यास्तु' इति वाक्येन नव्यानां मतमारभ्यते जगन्नाथपण्डितेन । तत्राद्ययोः द्वयोरद्वैतवेदान्तमतमाश्रितम्। वेदान्ते शुक्तिकायामधिष्ठाने रजतावभासः विषयादिगतचाकचक्यादिदोषजन्यस्तद्वदत्रापि भावनाविशषदोषमहिम्ना सहृद-यात्मनि दुष्यन्तत्वावभासः । एषोऽवभासः सदसद्विलक्षणः यतः नापि सन् उत्तरत्रबाधसत्त्वान्नापि काकदन्तशश-विषाणादिवदसन् प्रतीतेरतः सदसद्विलक्षणः । अत्राप्येवमेव ।

नव्येषु तृतीये लोल्लटमतस्य चतुर्थे शङ्कुकमतस्य च संवादोऽस्ति । 'तदुक्तं पण्डितराजेन – 'मुख्यतया दुःष्यन्तादिगत एव रसो रत्यादिः कमनीयविभावाद्यभिनयप्रदर्शनकोविदे दुष्यन्ताद्यनुकर्तरि नटे समारोप्य साक्षात्क्रियते' इत्येके[8] । नटगतो रस इति किल लोल्लटमतम् । व्याख्यातारोऽपि लोल्लटमतमित्यभिमन्यन्ते, परमसौ लोल्लटः प्राचीनतम इति कथं नव्यमतान्तःपाती । चतुर्थे मते रसोऽनुमीयत इत्यवोचदनुमितिवादी श्रीशङ्कुकः । असावपि प्राचीन एव । पञ्चमं नव्यमतं विभावादयस्समुदिता रसाः, षष्ठं विभावादिषु यश्चमत्कारी स रस इति । सप्ताष्ट-मनवममतेषु यथाक्रमं विभाव एव रसः, अनुभाव एव रसः, व्यभिचारो एव रसः । एवं पण्डितराजः रससूत्रत्याख्यान एकादश मतानि निरूत्त्यैतेषां रहस्यमाह यथा –

**अभिनवगुप्तमतम्** – विभावानुभावव्यभिचारिभिः संयोगाद् व्यञ्जनात् रसस्य चिदानन्दविशिष्टस्थाय्यात्मनः स्थाय्युपहितचिदात्मनो वा निष्पत्तिः स्वरूपेण प्रकाशयनम् ।

**भट्टनायकमतम्** - विभावानुभावव्यभिचारिणां सम्यक्साधारणात्मतया योगाद्भावकत्वव्यापारेण भावनाद्रसस्य स्थाय्युपहितसत्त्वोद्रेकप्रकाशितस्वात्मानन्दरूपस्य निष्पत्तिर्भोगाख्येन साक्षात्कारेण विषयीकृतिः ।

**नव्यमतेष्वादिमत्रयम्** - विभावाऽनुभावव्यभिचारिणां संयोगाद् भावनाविशेष रूपाद्दोषाद्रसस्या-निर्वचनीयदुष्यन्तरत्यात्मनो निष्पत्तिरुत्पत्तिः (प्रथमम्) । विभावादीनां संयोगात् ज्ञानात् रसस्य ज्ञानविशेषात्मनो निष्पत्तिरुत्पत्तिः (द्वितीयम्) । विभावादीनां संबन्धात् रसस्य रत्यादेर्निष्पत्तिः आरोपः (तृतीयम्) ।

**अवशिष्टानां निरूपणम् ।** विभावादिभिः कृत्रिमैरपि अकृत्रिमतया गृहीतैः संयोगाद् अनुमानात् रसस्य रत्यादेर्निष्पत्तिरनुमितिर्नटादौ पक्ष इति (चतुर्थम्) । विभावादीनां त्रयाणां संयोगात्समुदायात् रसनिष्पत्ती रसपद-व्यवहारः (पञ्चमम्) । विभावादिषु सम्यग्गोचरात् चमत्कारात् (षष्ठम्) । इतः परमेकेन वाक्येनान्तिमं मतत्रयं दूष्यते यथा - 'तदेवं पर्यवसितेषु मतेषु सूत्रविरोध' इति ।[9]

इत्थं पण्डितराजः अभिनवगुप्तभट्टनायकमते स्वबुद्ध्या परिशील्य नव्यमतेषु संभावनां विधाय रससूत्रे स्वीयं योगदानमनुपमं व्यधात् ।।

**सन्दर्भाः**

1. ना.शा. 6 - नाट्यशास्त्रम् भरतमुनिः, प्रकाशकः काशीहिन्दूविश्वविद्यालयीय संस्कृत साहित्यानुसन्धान-समितिः, 2012 ।
2. ना.शा. 6 - नाट्यशास्त्रम् भरतमुनिः, प्रकाशकः काशीहिन्दूविश्वविद्यालयीय संस्कृत साहित्यानुसन्धान-समितिः, 2012, पृ. सं. 650 ।
3. रस. ग. - रसगंगाधर पृ. सं. 107-108, पण्डितराजः काशीहिन्दूविश्वविद्यालय, 2020 ।
4. का. प्र. - काव्यप्रकाश ।
5. तै. उ. - तैत्तरीयोपनिषद ।
6. रस. ग. पृ. सं. 123-124 ।
7. रस. ग. पृ. सं. 130 ।
8. रस. ग. पृ. सं. 147 ।
9. रस. ग. पृ. सं. 150-151 ।

**निदेशकः,**
**केन्द्रीयसंस्कृतविश्वविद्यालयः,**
**गुरूवायूरपरिसरः, केरलम् ।**



# संस्कृतवाङ्मये विज्ञानस्य मौलिकतत्त्वानां तर्कगणितनिरीक्षणपरीक्षणादीनां समृद्धपरम्परा

✍प्रो. देवदत्तसरोदे

**(मनुष्यस्यानुभवेनावलोकनेन च लब्धं वैश्विकं ज्ञानं नाम विज्ञानमित्युक्ते साधनसन्दर्भे स्पष्टीकरण-मावश्यकम् । तच्च सोपानत्रयात्मकं तर्कगणितपरीक्षणरूपम् । तर्को नाम कार्य्यकारणभावः । गणितञ्च नामात्र पद्धतिविशेषेण मापनम् । परीक्षणञ्च तदुच्यते यत्तुल्यपरिणामप्रदप्रयोगो भवेत् । तुल्यत्वप्रयोजक-ञ्च पौनःपुन्यमिति न तिरोहितम् । साधनानुगुणा सिद्धिरिति रीत्या वैज्ञानिकैरत्र बलं न्यस्यते । एतत्सर्व्वं संस्कृतवाङ्मये क्वचित् स्थूलतया क्वचिच्च सूक्ष्मतया निरूपितमृषिभिरित्यत्र वेदानां तद्भाष्याणां छन्दः-शास्त्रस्य शुल्बसूत्रस्योपनिषदां रामायणस्य आर्यभटभास्कराचार्यादीनामुद्धरणपुरस्सरं प्रामाण्यन्तनोति लेख-कोऽत्र लेखे । प्रतनोति च न्यायगणितरसायनविद्यायाः तालिकामाध्यमेनोपयोगिनो ग्रन्थान् ग्रन्थकारांश्च । विशेषतः संख्याविज्ञानमाश्रित्य प्रत्तविवरणमतीव चेतश्चमत्कर्त्तुं क्षमम् । सत्यपि विज्ञाने कथमिह प्रयोगा-द्यसत्त्वमिति कारणानि विमृश्य लेखकोऽस्मान् तत्र प्रवर्त्तयितुं धक्करोतीव लक्ष्यते ।)**

**प्रस्तावना** - अद्यत्वे सर्वत्र विज्ञानस्य प्रचण्डविस्फोटनेन जगति प्रतिक्षेत्रं विकासस्य गतिर्वर्धिता, सम्पूर्णं जगदनेन प्रभावितं विद्यते । विज्ञानप्रविधिभ्यां सूचनाप्रौद्योगिक्या च निखिलं जगदिदं **यत्र विश्वं भवत्येकनीडम्**[1] इति वेद- वचनं सत्यापयति । विज्ञानप्रविधिभ्यां अभूतपूर्वविकासेन एकतः मनुष्यस्य कृते सुखसौकर्यार्थं विस्मयकरं संगणकम्, विश्वव्याप्तम् अन्तर्जालं नानाविधयन्त्राणि, उपकरणानि, अतर्कितसाधनानि च समुपलब्धानि अपरतः विज्ञानस्य दुरुपयोगेन भयप्रदाः समस्याः अपि प्रादुर्भूताः ।

साम्प्रतिके लोके विशिष्य भारतीयसमाजे धारणैषा प्रचलिताऽस्ति, यत् भारते अध्यात्मापेक्षया विज्ञान-विषयकचिन्तनम् आविष्कारानुसन्धानानि प्रयोगाश्च नगण्या अल्पीयांसः एव । विज्ञानविषयकचिन्तनस्य, नियमानां, सिद्धान्तानां वैज्ञानिकयन्त्राणाम्, उपकरणानां प्रविधेः विकासः पाश्चात्त्यदेशेष्वेव अधिकतया जातः इति आपाततः सत्यमेतत् प्रतिभाति, परन्तु परमार्थतः नैतत् पूर्णतः सत्यम् । यदि विगतत्रिशतवर्षाणां विज्ञान-विषयकमतिह्यं विलोकयामः तर्हि पुनर्जागरणकालात् परं (१४ शताब्दीतः १६ शताब्दीपर्यन्तं) औद्योगिक - क्रान्तितः (१७६० तः १८४०) पाश्चात्यदेशेषु विज्ञानस्य विकासः समजनि, तदा भारतं पराधीनमासीत् अपि च वैदेशिकलुण्ठाकाक्रान्तॄणां लुण्ठनैः विध्वंसनैः राजनीतिकास्थिरताराजकतावैमनस्य कलहादिभिः शिक्षाव्यवस्था विज्ञानस्य परम्परा च क्वचित् खण्डिता तु क्वचित् लुप्ता । परन्तु ततः प्राक् प्राचोनकालस्यैतिह्यं यदि वयं पश्यामः, अपि च भारतस्य

पाश्चात्त्यदेशानां वैज्ञानिकविकासस्य कालक्रमिकं तुलनात्मकम् अध्ययनं कुर्मः तर्हि प्राचीनभारते वैज्ञानिकचिन्तनं प्रगतं समृद्धञ्चावर्तत । तदानीं **विज्ञानस्य अनेकविद्याशाखाः विकसिताः आसन्, यत्र 32 विद्याः अपि च 64 कलाः आसन्** परम्परया च विज्ञानस्य शिक्षणं प्रयोगाश्च भवन्ति स्म इत्येतत् तु स्पष्टं प्रतिभाति[२] । एतस्य निदर्शनभूतानि प्राचीनसंस्कृतवाङ्मयं वास्तुभवनानि, मन्दिराणि साक्ष्यरूपेण साम्प्रतमपि विलसन्ति । प्राचीनभारतं ज्ञानविज्ञानेन **धनधान्येन समृद्धम् ऐश्वर्यशालि चासीत्**[3] भारतस्य अर्थव्यवस्था निखिले विश्वे सर्वेभ्यो बृहती आसोत्, यैषा समृद्धिः ऐश्वर्यं विज्ञानमन्तरेण प्रविधिं विना सर्वथा दुःशक ।

शोधलेखेऽस्मिन् भारते विज्ञानस्य विकासाय अपेक्षितमौलिकतत्त्वानां चिन्तनपरम्परायाः अपि च भारतीयर्षिमुनीनां, विपश्चिद्वराणां विज्ञानस्य विकासाय विहितमहत्त्वपूर्णयोगदानस्य विषये मौलिकं संक्षिप्तञ्च दिग्दर्शनं विधीयते ।

संस्कृतभाषायां ज्ञानं विज्ञानञ्च इति पदद्वयमुपलभ्यते, प्रसङ्गतः भिन्न-भिन्नार्थे दृश्यते, उपनिषदि विज्ञानं ब्रह्म इति[४] अमरकोशे तु मोक्षे बुद्धिर्ज्ञानम् अन्यत्र शिल्पे शास्त्रे च मतिर्विज्ञानम् इति प्रोक्तम्[५] ।

विज्ञानस्य परिभाषा आक्सफोर्ड शब्दकोशानुसारम् अधोलिखितं .......

The intellectual and practical activity encompassing the systematic study of the structure and behaviour of the physical and natural world through observation and eñperiment.

विज्ञानं नाम कश्चन बौद्धिकः प्रायोगिकश्च क्रियाकलापो विद्यते, यत्र निरीक्षणेन प्रयोगण च, भौतिकजगतः स्वभावस्य गुणधर्माणां, नियमानाञ्चाध्ययनं क्रियते ।

पूर्वोक्तां परिभाषाम् एवं वर्णयितुं शक्यते, यद्विशिष्टज्ञानम् अनुभवो वा व्यवस्थिताध्ययनेन, निरीक्षणेन, कार्यकारणभावेन तार्किकरीत्या, गणितीयपद्धत्या मातुं, प्रायोगिकरीत्या च निरूपयितुं शक्यते तदेव विज्ञानमित्य-भिधीयते ।

अस्य विज्ञानस्य त्रीणि वैशिष्ट्यानि -

1. कार्यकारणभावः (शास्त्रीयतर्कः)
2. गणितीयमापनम्
3. प्रयोगः (पुनः परीक्षितुं शक्यम्)

कस्यापि विषयस्य तार्किकरीत्या अध्ययनमन्तरेण गणितीयमापनं विना पुनः परीक्षिते सति तुल्यपरिणामं विना यत्किञ्चिद् ज्ञानं भवति तद् विज्ञानमिति नाङ्गीक्रियते । अतः विज्ञानं नाम कस्यापि विषयस्य कार्यकारण-भावपुरस्सरं तार्किकमध्ययनं गणितीयमापनं पुनःपरीक्षितुं योग्यं यद् भवति तदेव विज्ञानम् ।

इमानि त्रीणि वैशिष्ट्यानि प्राकृतिकविज्ञानस्य सर्वासु शाखासु समानरूपेण अपेक्षितानि सन्ति ।

**कार्यकारणभाव:** – प्राकृतिकजगति विद्यमानानां नियमानाम्, तत्त्वानाम् अध्ययनं कार्यकारणभावेन विधातव्यम् । विज्ञानस्य प्रामाणिकतायै तर्क: अपेक्षित: अथवा कार्यकारणभावेन विचारो विधेय: । प्रत्येकं कार्यं कारणमन्तरेण न समुत्पद्यते। कारणमन्तरेण यादृच्छिकरीत्या कार्यं न जायते । एवंजातीयक: कार्यकारणभावयुक्त: तार्किकविचार: ऋग्वेदस्य नारदीयसूक्ते प्राप्यते, अत्र दार्शनिकप्रश्नमुखेन तार्किकचिन्तनं विधीयते । यदा कश्चन विपश्चिद् अनन्तं ब्रह्माण्डं वोक्षते तस्य मनसि स्वाभाविकतया समुदयमाना: मौलिका: प्रश्ना: इमे – किमिदम् ? कथमिदम् ? कस्माद्हेतो: ? इदम् इति । किमिदम्, कथमिदम् इत्यनयो: समाधानं विज्ञानं दातुं प्रभवति परं कस्मात् कारणात् किं निमित्तमिदं तु दर्शनशास्त्रमेव समाधत्ते । नारदीयसूक्ते प्रकटीकृतो महाप्रश्न: एव अथर्ववेदे संप्रश्नाख्यं ब्रह्मरूपेण अभिवर्णितम् ।

**यो देवानां नामत एक एव तं संप्रश्नं भुवना यन्ति सर्वा**[6]

देवानां नाम्नां सत्यपि भेदे एक एव तस्य संप्रश्नाख्यस्य ब्रह्मण: शरण्यं सर्वाणि भुवनानि यन्ति । अनन्तं ब्रह्माण्डं वीक्ष्य आनन्त्यम्, अज्ञेयत्वम् अनिर्वचनीयत्वम् इत्यादिभि: गुणै: मुग्धा: स्तब्धा: सन्त: ऋषय: ऊचु: कस्मै **देवाय हविषा विधेम**[7] इति । इदमित्थम् अवगन्तव्यम् क: इति सम्प्रश्न:, क: नाम प्रजापतिरपि अर्थात् ब्रह्मेति एवं क: सम्प्रश्न: तस्य समाधानमपि क: (प्रजापति:) एव । अत: कस्मै देवाय हविषा विधेम, कस्मै (प्रजा-पतये) देवाय हविषा विधेम इति समाधानम् । अत: किं स्वरूपं ब्रह्म संप्रश्न:, स एव तस्य महाप्रश्नस्य समाधानमपि । क: इति पदस्य किम् प्रातिपादिकं तस्य चतुर्थ्यां कस्मै कस्य कृते इत्यर्थ: । क: इत्यस्यार्थ: प्रजापतिरपि अस्ति अत: कस्मै इत्यस्यार्थ: प्रजापतय इति भवति । एतस्मादेव कारणात् स एव प्रश्न: तदेव समाधानम् अस्ति । सम्पूर्णं नासदीयसूक्तम् अद्भुतै: गभीरै: दार्शनिकै: प्रश्नै: वैदुष्यपूर्णचिन्तनेन बुद्धिप्रगल्भादिभि: ओतप्रोतं विद्यते । एष एव सम्प्रश्न:, जिज्ञासाया: परम्परा उपनिषत्सु दर्शनादिशास्त्रेषु विस्तृतिमवाप ।

नासदीयसूक्तं निम्नाङ्कितं विद्यते यत्र नानाविधप्रश्नै: जिज्ञासा प्रकटीकृता । सैषा जिज्ञासा, तर्क:, हेतुवादश्च सायणभाष्ये स्पष्टं भवति तद् भाष्यमपि अधस्ताद्दीयते..........

**नास॑दासी॒न्नो सदा॑सीत्त॒दानीं॒ नासी॒द्रजो॒ नो व्यो॑मा प॒रो यत् ।**

**किमाव॑रीव॒: कुह॒ कस्य॒ शर्म॒न्नम्भ॒: किमा॑सी॒द्गह॑नं गभी॒रम् ॥** ऋ. १०.१२९.१

'तपसस्तन्महिनाजायतैकम्' इत्यादिनाग्रे सृष्टि: प्रतिपादयिष्यते । अधुना तत: प्रागवस्था निरस्तसमस्त-प्रपञ्चा या प्रलयावस्था सा निरूप्यते । "तदानीं प्रलयदशायामवस्थितं यदस्य जगतो मूलकारणं तत् "असत् शशविषाणवन्निरूपाख्यं "न "आसीत् । न हि तादृशात् कारणादस्य सतो जगत उत्पत्ति: संभवति । तथा "नो

“सत् नैव सदात्मवत् सत्त्वेन निर्वाच्यम् “आसीत् । यद्यपि सदसदात्मकं प्रत्येकं विलक्षणं भवति तथापि भावाभावयोः सहावस्थानमपि संभवति । कुतस्तयोः तादात्म्यमिति उभयविलक्षणमनिर्वाच्यमेवासीदित्यर्थः । ननु नो सदिति पारमार्थिकसत्त्वस्य निषेधः । तर्ह्यात्मनोऽप्यनिर्वाच्यत्वप्रसङ्गः । अथोच्येत । न । आनीदवातमिति तस्य सत्त्वमग्रे वक्ष्यते परिशेषान्मायाया एवात्र सत्त्वं निषिध्यत इति । एवमपि तदानीमिति विशेषणानर्थक्यं व्यवहार-दशायामपि तस्याः पारमार्थिकसत्त्वाभावात् । अथ व्यावहारिकसतां पृथिव्यादीनां भावानां विद्यमानत्वात् कथं नो सदिति निषेधः । तत्राह । “नासीद्रज इत्यादि । लोका रजांस्युच्यन्ते ( निरु, ४, १९) इति यास्कः । अत्र च सामान्यापेक्षमेकवचनम् । व्योम्नो वक्ष्यमाणत्वात्तस्याधस्तनाः पातालादयः पृथिव्यन्ता नासन्नित्यर्थः । तथा “व्योम अन्तरिक्षं तदपि “नो नैवासीत् । पर इति सकारान्तं परस्तादित्यर्थे वर्तते । परशब्दाच्छान्दसोऽस्तातेरर्थेऽसिप्रत्ययः । “परः व्योम्नः परस्तादुपरिदेशे द्युलोकप्रभृतिसत्यलोकान्तं “यत् अस्ति तदपि नासीदित्यर्थः । अनेन चतुर्दशभुवनगर्भं ब्रह्माण्डं स्वरूपेण निषिद्धं भवति । अथ तदावरकत्वेन पुराणेषु प्रसिद्धानि यानि वियदादिभूतानि तेषामवस्थानप्रदेशं तदावरणनिमित्तं चाक्षेपमुखेन क्रमेण निषेधयति किमावरीवरिति । “किम् आवरणीयं तत्त्वमावरकभूतजातम् “आव-रीवः । अत्यन्तमावृणुयात् । अवार्थाभावात् तदावरकमपि नासीदित्यर्थः ।। वृणोतेर्यङ्लुगन्ताच्छान्दसे लङि तिपि रूपमैतत् ।। यद्वा । किमिति प्रथमैव । किं तत्त्वमावरकमावृणुयात् । आव्रियमाणवत्तदपि स्वरूपेण नासीदित्यर्थः । अवृण्वत् तत्तत्त्वं “कुह कुत्र देशेऽवस्थायावृणोति । आधारभूतस्तादृशो देशोऽपि नासीदित्यर्थः ।। किंशब्दात् सप्त-म्यर्थे हप्रत्ययः । कु तिहोः (पा, सू, ७.३.१०४) इति प्रकृतेः क्वादेशः ।। “कस्य “शर्मन् कस्य वा भोक्तुर्जीवस्य शर्मणि सुखदुःखसाक्षात्कारलक्षणे भोगे निमित्तभूते सति तदावरकं तत्त्वमावृणुयात् । जीवानामुपभोगार्था हि सृष्टिः। तस्यां हि सत्यां ब्रह्माण्डस्य भूतैरावरणं प्रलयदशायां च भोक्तारो जीवा उपाधिविलयात् प्रलीना इति कस्य कश्चिदपि भोक्ता न संभवतीत्यावरणस्य निमित्ताभावादपि तन्न घटत इत्यर्थः । एतन भोग्यप्रपञ्चवत् भोक्तृप्रपञ्चोऽपि तदानीं नासीदित्युक्तं भवति ।। किंशब्दादुत्तरस्य ङसः ‘सावेकाचः०’ इति प्राप्तस्योदात्तत्वस्य ‘न गोश्वन्साववर्ण’ इति प्रतिषेधः । ‘सुपां सुलुक्’ इति शर्मणः सप्तम्या लुक् ।। यद्यपि सावरणस्य ब्रह्माण्डस्य निषेधेन तदन्तर्गतमप्सत्त्वमपि निराकृतं तथापि ‘आपो वा इदमग्रे सलिलमासीत् (तै. सं. ७,१,५,१) इति श्रुत्या कश्चिदपां सद्भावमाशङ्केत । तं प्रत्याचष्टे अम्भः किमासीत् इति । गहनं दुष्प्रवेशं गभीरं दुरवस्थानमत्यगाधम् ईदृशम् “अम्भः” किमासीत् । तदपि नैवासीदित्यर्थः । श्रुतिस्त्ववान्तरप्रलयविषया ।।

**न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः ।**

**आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किं चनास ॥** ऋ. १०.१२९.२

ननूक्तस्य प्रतिसंहारस्य संहर्त्रपेक्षत्वात् स एव संहर्ता मृत्युर्विद्यत इत्यत आह "न "मृत्युरासीत् इति । ननु यदि स नासीत् तर्हि तदभावकृतम् "अमृतम् अमरणं प्राणिनामवस्थानं तदानीमपि स्यात् तत्राह । "अमृतं "न "तर्हि इति । तर्हि तस्मिन् प्रतिहारसमये । अयं भावः । सर्वेषां प्राणिनां परिपक्वं भोगहेतुभूतं सर्वं कर्म यदोपभुक्तमासीत् तदा भोगाभावान्निष्प्रयोजनमिदं जगदिति परमेश्वरस्य मनसि संजिहीर्षा जायते । परिपक्वं भोगहेतुभूतं सर्वं कर्म यदोपभुक्तमासीत् तदा भोगाभावान्निष्प्रयोजनमिदं जगदिति परमेश्वरस्य मनसि संजिहीर्षा जायते । तथैव स मृत्युः सर्वं जगत् संहरत इति किमनेन मृत्युना संहर्त्रा तदभावकृतं वा कथममरणं स्यादिति । एतदेवाभिप्रेत्य कठैराम्नायते- यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः (क.उ. २.२५) इति । नन्वेतस्य सर्वस्याधिकरणभूतः कालो विद्यत इत्यत आह न रात्र्या इति । रात्र्या अह्नः च प्रकेतः प्रज्ञानं न आसीत् । तद्धेतुभूतयोः सूर्याचन्द्रमसोरभावात् । एतेनाहोरात्रनिषेधेन तदात्मको मासर्तुसंवत्सरप्रभतिकः सर्वः कालः प्रत्याख्यातः। कथं तर्हि नो सदासीत्तदानीमिति कालवाची प्रत्ययः । उपचारादिति ब्रूमः । यथेदानींतननिषेधस्य कालोऽवच्छेदक- स्तथा मायापि तदवच्छेदहेतुरित्यवच्छेदकत्वसाम्येनाकालेऽपि कालवाची प्रत्ययः । यदवादिष्म ब्रह्मणः परमार्थसत्त्वमग्रे वक्ष्यत इति तदिदानीं दर्शयत्यानीदिति । "तत् सकलवेदान्तप्रसिद्धं ब्रह्मतत्त्वम् "आनीत् प्राणितवत् । नन्वेवं प्राण- नकर्तुर्जीवभावापन्नस्यैव ब्रह्मणः सत्त्वं स्यात् न विवक्षितस्य निरुपाधिकस्य ब्रह्मणः । अप्राणो ह्यमनाः शुद्धः इति तस्य प्राणसंबन्धाभावात् तत्राह आनीदवातमिति । अयमाशयः । आनीदित्यत्र धात्वर्थक्रिया तत्कर्ता तस्य च भूतकालसंबन्ध इति त्रयोऽर्थाः प्रतीयन्ते । तत्र समुदायो न विधीयते यथाग्नेयोऽष्टाकपाल इति येन ब्रह्मणः सत्त्वं न स्यात् । किं तर्ह्यनेन कर्तृत्वमनूद्य भूतकालसत्तालक्षणो गुणो विधीयते दध्ना जुहोतीति वाक्यान्तरविहिताग्निहोत्रानुवादेन तत्र गुणविधानम् । तत्राप्यनेन कर्तृत्वविशिष्टस्य न पूर्वकालसत्ता विधीयते तन्निषेधानुपपत्तिप्रसङ्गात् अतोऽनेन कर्तृत्वेन इदानींतनेनोपलक्षितं यन्निरुपाधिकं परं ब्रह्म तस्यैव भूतकालसत्ता विधीयत इति न कश्चिद्दोष इति । नन्वीदृशस्य ब्रह्मणो मायया सह संबन्धासंभवात् सांख्याभिमता स्वतन्त्रा सद्रूपा सत्त्वरजस्तमोगुणात्मिका मूलप्रकृति- रेवाभिमतेति कथं नो सदिति निषेधः । तत्राह "स्वधया इति । स्वस्मिन् धीयते ध्रियत आश्रित्य वर्तत इति स्वधा माया । तया तद्ब्रह्मैकमविभागापन्नमासीत् । 'सहयुक्तेऽप्रधाने' (पा.सू. २.३.१९) इति तृतीया सहशब्दयोगाभावेऽपि सहार्थयोगे भवति वृद्धो यूना (पा. सू. १.२.६५) इति निपातनाल्लिङ्गात् । अत्र प्रकृतिप्रत्ययाभ्यां तस्याः स्वातन्त्र्यं निवार्यते । यद्यपि असङ्गस्य ब्रह्मणस्तया सह संबन्धो न संभवति तथापि तस्मिन्नविद्यया तत्स्वरूपमिव संबन्धोऽप्यध्यस्यते यथा शुक्तिकायां रजतस्य । एतेन सद्रूपत्वमपि तस्याः प्रत्याख्यातम् । ननु यदि माया ब्रह्मणा सहाविभागापन्ना तर्हि तस्या अनिर्वाच्यत्वात् ब्रह्मणोऽपि तत्प्रसङ्ग इति कथं तस्य सत्त्वमुक्तम् आनीदवातमिति । ब्रह्मणो वा सत्त्वात्तस्या अपि सत्त्वप्रसङ्ग इति कथं नो सदासीदिति सत्त्वप्रतिषेधः । मैवम् । अयुक्ति-

दृष्ट्यैक्यावभासेऽपि युक्त्या विविच्य मायांशस्यानिर्वाच्यत्वं ब्रह्मणः सत्त्वं च प्रतिपादितम् । ननु दृग्दृश्याविति द्वावेव पदार्थौ आनीदवातं स्वधयेति तौ चेदङ्गीक्रियेते तत्किमपरमवशिष्यते यत् नासीद्रजः इत्यादिना प्रतिषिध्येत तत्राह तस्मादिति । "तस्माद्ध तस्मात् खलु पूर्वोक्तान्मायासहितात् ब्रह्मणः "अन्यत् "किं "चन किमपि वस्तु भूतभौतिकात्मकं जगत् "न "आस न बभूव ।। 'छन्दस्युभयथा' इति लिटः सार्वधातुकत्वादस्तेर्भूभावाभावः ।। ननु तदानीमन्यस्य सत्त्वनिषेधो न शङ्क्यः । असत्त्वे चाप्रसक्तत्वान्न निषेधोपयोग इत्यत आह पर इति । "परः परस्तात् सृष्टेरूर्ध्वं वर्तमानमिदं जगत् तदानीं न बभूवेत्यर्थः । अन्यथा उक्तरीत्या क्वचिदपि निषेधो च स्यादिति भावः ।।

**तम॑ आसी॒त्तम॑सा गू॒ळ्हमग्रे॑ऽप्रके॒तं स॑लि॒लं सर्व॑मा इ॒दम् ।**
**तु॒च्छयेना॒भ्वपि॑हितं॒ यदासी॒त्तप॑स॒स्तन्म॑हि॒नाजा॑य॒तैक॑म् ॥** ऋ. १०.१२९.३

ननूक्तप्रकारेण यदि पूर्वमिदं जगन्नासीत् कथं तर्हि तस्य जन्म । जायमानस्य जनिक्रियायां कर्तृत्वेन कारकत्वात् कारकं च कारणावान्तरविशष इति कारकस्य सतो नियतपूर्वक्षणवर्तित्वस्य अवश्यंभावात् । अथैतद्दोषपरिजिहीर्षया जनिक्रियायाः प्रागपि तद्विद्यत इत्युच्यते । कथं तस्य जन्म । अत आह तमसा गूळ्हमग्रे इति। "अग्रे सृष्टेः प्राक् प्रलयदशायां भूतभौतिकं सर्वं जगत् "तमसा "ग्रूळ्हम् । यथा नैशं तमः सर्वपदार्थजातमावृणोति तद्वत् । आत्मतत्त्वस्यावरकत्वान्मायापरसंज्ञं भावरूपाज्ञानमत्र तम इत्युच्यते । तेन तमसा निगूढं संवृतं कारणभूतेन तेनाच्छादितं भवति । आच्छादकात् तस्मात्तमसो नामरूपाभ्यां यदाविर्भवनं तदेव तस्य जन्मेत्युच्यते । एतेन कारणा-वस्थायामसदेव कार्यमुत्पद्यते इत्यसद्वादिनोऽसत्कार्यवादिनो ये मन्यन्ते ते प्रत्याख्याताः । ननु कारणे तमसि तज्जग-दात्मकं कार्यं विद्यते चेत् कथं नासीद्रज इत्यादिनिषेधः । तत्राह "तम "आसीत् इति । तमोभावरूपाज्ञानं मूलकार-णम् । तद्रूपता तदात्मनाम् । यतः सर्वं जगत् प्राक् तम आसीदतो निषिध्यत इत्यर्थः । नन्वावरकत्वादावरकं तमः कर्तृ आवार्यत्वाज्जगत्कर्म । कथं तयोः कर्मकर्त्रोस्तादात्म्यम् । तत्राह अप्रकेतमिति । "अप्रकेतम् अप्रज्ञायमानम् । अयमर्थः । यद्यपि जगतस्तमसश्च कर्मकर्तृभावो यौक्तिको विद्यते तथापि व्यवहारदशायामिव तस्यां दशायां नामरूपाभ्यां विस्पष्टं न ज्ञायत इति तादात्म्यवर्णनम् । अत एव मनुना स्मर्यते – 'आसीदिदं तमोभूतमप्रज्ञातम-लक्षणम् । अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः' ( मनु. १.५) इति । कुतो वा न प्रज्ञायते तत्राह । "सलिलम् । षल गतौ । औणादिक इलच् । "इदं दृश्यमानं "सर्वं जगत् सलिलं कारणेन संगतमविभागापन्नम् "आः आसीत् । 'अस्तेर्लङि: तिपि', 'बहुलं छन्दसि', 'इतीडभावे', 'हल्ङ्याब्भ्यः', 'इति तिलोपे', 'तिप्यनस्तेः' (पा. सू ८.२.७३) इति पर्युदासाद्दकाराभावः । यद्वा सलिलमिति लुप्तोपमम् । सलिलमिव । यथा क्षीरेणाविभागापन्नं नीरं दुर्विज्ञानं तथा तमसाविभागापन्नं जगन्न शक्यविज्ञानमित्यर्थः । ननु विविधविचित्ररूपभूयसः प्रपञ्चस्य कथमतितुच्छेन तमसा क्षीरेण नीरस्येवाभिभवः । तथा तमोऽपि क्षीरवद्बलवदित्येवोच्यते । तर्हि दुर्बलस्य जगतः सर्गसमयेऽपि नोद्भवसंभव इत्यत

आह तुच्छ्येन इति । आ समन्ताद्भवतीति "आभु: "तुच्छ्येन । छान्दसो यकारोपजनः । तुच्छेन तुच्छकल्पनेन सदसद्विलक्षणेन भावरूपाज्ञानेन "अपिहितं छादितम् "आसीत् । दधातेः कर्मणि निष्ठा । दधातेर्हि । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । "एकम् एकीभूतं कारणेन तमसाविभागतां प्राप्तमपि तत्कार्यजातं "तपसः स्रष्ट-व्यपर्यालोचनरूपस्य "महिनामाहात्म्येन "अजायत उत्पन्नम् । तपसः स्रष्टव्यपर्यालोचनरूपत्वं चान्यत्राम्नायते - 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः' ( मु. उ. १.१.९) इति ॥

**कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत् ।**

**सतो बन्धुमसति निरविन्दन्हृदि प्रतीष्या कवयो मनीषा ॥** ऋ. १०.१२९.४

ननूक्तरीत्या यदीश्वरस्य पर्यालोचनं जगतः पुनरुत्पत्तौ कारणं तदेव किं निबन्धनमित्यत आह कामस्तदग्र इति । "अग्रे अस्य विकारजातस्य सृष्टेः प्रागवस्थायां परमेश्वरस्य मनसि "कामः "समवर्तत सम्यगजायत । सिसृक्षा जातेत्यर्थः । ईश्वरस्य सिसृक्षा वा किंहेतुकेत्यत आह मनस इति । "मनसः अन्तःकरणस्य संबन्धि वासनाशेषेण मायायां विलीनेऽन्तःकरणे समवेतम् । सामान्यापेक्षमेकवचनम् । सर्वप्राण्यन्तःकरणेषु समवेतमित्यर्थः । एतेनात्मनो गुणाधारत्वं प्रत्याख्यातम् । तादृशं "रेतः भाविनः प्रपञ्चस्य बीजभूतं "प्रथमम् अतीते कल्पे प्राणिभिः कृतं पुण्यात्मकं कर्म "यत् यतः कारणात् सृष्टिसमये "आसीत् अभवत् । भूष्णु वर्धिष्ण्वजायत परिपक्वं सत् फलोन्मुखमासीदित्यर्थः । तत्ततो हेतोः फलप्रदस्य सर्वसाक्षिणः कर्माध्यक्षस्य परमेश्वरस्य मनसि सिसृक्षा अजायतेत्यर्थः । तस्यां च जातायां स्रष्टव्यं पर्यालोच्य ततः सर्वं जगत् सृजति । तथा चाम्नायते - 'सोऽकामयत बहुः स्यां प्रजायेयेति स तपोऽतप्यत स तपस्तप्त्वेदं सर्वमसृजत यदिदं किंच' ( तै. आ. ८. ६) इति श्रुतिः । आत्मनेत्थमवगमितेऽर्थे विद्वदनुभवमप्यनुग्राहकत्वेन प्रमाणयति सत इति । "सतः सत्त्वेन इदानीमनुभूयमानस्य सर्वस्य जगतः "बन्धुं बन्धकं हेतुभूतं कल्पान्तरे प्राण्यनुष्ठितं कर्मसमूहं "कवयः क्रान्तदर्शना अतीतानागतवर्तमानाभिज्ञा योगिनः "हृदि हृदये निरुद्धया "मनीषा मनीषया बुद्ध्या । 'सुपां सुलुक्०' इति तृतीयाया लुक् । "प्रतीष्य विचार्य। 'अन्येषामपि' इति सांहितिको दीर्घः । "असति सद्विलक्षणेऽव्याकृते कारणे "निरविन्दन् निष्कृष्यालभन्त । विविच्याजानन्नित्यर्थः ॥

**तिरश्चीनो विततो रश्मिरेषामधः स्विदासी३दुपरि स्विदासी३त् ।**

**रेतोधा आसन्महिमान आसन्स्वधा अवस्तात्प्रयतिः परस्तात् ॥** ऋ. १०.१२९.५

एवमविद्याकामकर्माणि सृष्टेर्हेतुत्वेनोक्तानि । अधुना तेषां स्वकार्यजनने शैघ्र्यं प्रतिपाद्यते । येयं नासदासीदित्यविद्या प्रतिपादिता यश्च कामस्तदग्रे इति कामो मनसो रेतः प्रथमं यदासीदिति यत्कर्म "एषाम् अविद्याकामकर्मणां वियदादिभूतजातानि सृजतां "रश्मिः रश्मिसदृशो यथा सूर्यरश्मिः उदयानन्तरं निमेषमात्रेण युगपत्

सर्वं जगत् व्याप्नोति तथा शीघ्रं सर्वत्र व्याप्नुवन् यः कार्यवर्गः "विततः विस्तृतः "आसीत् । स्विदासीत् इति वक्ष्यमाणमत्रापि संबध्यते । 'विचार्यमाणानाम्'( पा. सू. ८. २.९७) इति प्लुतः । तत्रोदात्त इत्यनुवृत्तेः स चोदात्तः । "स्वित् इति वितर्के । स कार्यवर्गः प्रथमतः किं "तिरश्चीनः तिर्यगवस्थितो मध्ये स्थित आसीत् किंवा "अधः. अधस्तात् "आसीत् । आहोस्वित् "उपरि उपरिष्टात् किमासीत् । 'उपरि स्विदासीदिति च' ( पा. सू ८.२.१०२) इत्यनुदात्तः प्लुतः । 'आत्मन आकाशः संभूत आकाशाद्वायुर्वायोरग्निः' (तै.आ. ८. १) इत्यादिकया पञ्चमीश्रुत्या तत उद्गातारं ततो होतारमितिवत् क्रमप्रतिपत्तौ सत्यामपि विद्युत्प्रकाशवत् सर्गस्य शीघ्रव्यापनेन तस्य क्रमस्य दुर्लक्षणत्वादेतेषु त्रिषु स्थानेषु प्राथम्यं कुत्रेति विचार्यते । एवं नाम शीघ्रं सर्वतो दिक्षु सर्गो निष्पन्न इत्यर्थः । एतदेव विभजते । सृष्टेषु कार्येषु मध्ये केचिद्भावाः "रेतोधाः रेतसो बीजभूतस्य कर्मणो विधातारः कर्तारो भोक्तारश्च जीवाः "आसन् अन्ये भावाः "महिमानः । स्वार्थिक इमनिच् । महान्तो वियदादयो भोग्याः "आसन् । एवं मायासहितः परमेश्वरः सर्वं जगत् सृष्ट्वा स्वयं चानुप्रविश्य भोक्तृभोग्यादिरूपेण विभागं कृतवानित्यर्थः । अयमेवार्थस्तैत्तिरीयके 'तत्सृष्ट्वा तदेवानुप्राविशत्' ( तै.आ.८.६) इत्यारभ्य प्रतिपाद्यते । तत्र च भोक्तृभोग्ययोर्मध्ये "स्वधा । अन्ननामैतत् । भोग्यप्रपञ्चः "अवस्तात् अवरो निकृष्ट आसीत् । "प्रयतिः प्रयतिता भोक्ता "परस्तात् पर उत्कृष्ट आसीत् । भोग्यप्रपञ्चं भोक्तृप्रपञ्चस्य शेषभूतं कृतवानित्यर्थः । श विभाषा परावराभ्याम् श ( पा. सू ५. ३.२९) इति प्रथमार्थे अस्तातिः । श अस्ताति च श ( पा. सू. ५.३.४०) इत्यवरशब्दस्यावादेशः । अवस्तादिति संहितायाम् ईषाअक्षादित्वात् प्रकृतिभावः ॥

**को अद्धा वेद क इह प्र वोचत्कुत आजाता कुत इयं विसृष्टिः ।**
**अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव ॥** ऋ. १०.१२९.६

एवं भोक्तृभोग्यरूपेण सृष्टिः संग्रहेण प्रतिपादिता । 'इ१तावद्वा इदमन्नं चौवान्नादश्च सोम एवान्नमग्निरन्नादन्' (श बा. १ ४.२.१३) इतिवत् । अथेदानीं सा सृष्टिर्दुर्विज्ञानेति न विस्तरेणाभिहितेत्याह को अद्धेति । "कः पुरुषः "अद्धा पारमार्थ्येन "वेद जानाति । "कः वा "इह अस्मिल्लोके "प्र "वोचत् प्रब्रूयात् । "इयं दृश्यमाना "विसृष्टिः विविधा भूतभौतिकभोक्तृभोग्यादिरूपेण बहुप्रकारा सृष्टिः "कतः कस्मादुपादानकारणात् । "कुतः कस्माच्च निमित्तकारणात् "आजाता समन्ताज्जाता प्रादुर्भूता । एतदुभयं सम्यक् को वेद को वा विस्तरेण वक्तुं शक्नुयादित्यर्थः । ननु देवाः अजानन्तः । सर्वज्ञास्ते ज्ञास्यन्ति वक्तुं च शक्नुवन्तीत्यत आह अर्वागिति । "देवाः च "अस्य जगतो विसर्जनेन "वियदादिभूतोत्पत्त्यनन्तरं विविधं यद्भौतिकं सर्जनं सष्टिस्तेन "अर्वाक् अर्वाचीनाः कृताः। भूतसृष्टेः पश्चाज्जाता इत्यर्थः । तथाविधास्ते कथं स्वोत्पत्तेः पूर्वकालीनां सृष्टिं जानीयुः । अजानन्तो वा कथं

प्रब्रुयुः । उक्तं दुर्विज्ञानत्वं निगमयति । "अथ एवं सति देवा अपि च जानन्ति किल । तद्व्यतिरिक्तः "कः नाम मनुष्यादिः "वेद तज्जगत्कारणं जानाति "यतः कारणात् कृत्स्नं जगत् "आबभूव अजायत ।।

**इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न ।**

**यो अस्याध्यक्षः परमे व्योमन्सो अङ्ग वेद यदि वा न वेद ॥** ऋ. १०.१२९.७

उक्तप्रकारेण यथेदं जगत्सर्जनं दुर्विज्ञानं एवं सृष्टं तज्जगत् दुर्धरमपीत्याह इयमिति । "यतः उपादानभूतात् परमात्मनः "इयं "विसृष्टिः विविधा गिरिनदीसमुद्रादिरूपेण विचित्रा सृष्टिः "आबभूव आजाता सोऽपि किल "यदि "वा "दधे धारयति "यदि "वा "न धारयति । एवं च को नाम अन्यो धर्तुं शक्नुयात् । यदि धारयेदीश्वर एव धारयेन्नान्य इत्यर्थः । एतेन कार्यस्य धारयितृत्वप्रतिपादनेन ब्रह्मण उपादानकारणत्वमुक्तं भवति । तथा च पारमार्षं सूत्रं --'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' (वे. सू. १. ४.२३) इति । यद्वा । अनेनार्धर्चेन पूर्वोक्तं सृष्टेर्दुर्ज्ञानत्वमेव द्रढयति । को वेदेत्यनुवर्त्तते । इयं विविधा सृष्टिः यत आबभूव आ समन्तादजाययेति को वेद । न कोऽपि । नास्त्येव जगतो जन्म न कदाचिदनीदृशं जगदिति बहवो भ्रान्ता भवन्त्यपि । यतः । 'जनिकर्तुः प्रकृतिः' (पा.सू १. ४.३०) इत्यपादानसंज्ञायां पञ्चम्यास्तसिल् । यस्मात् परमात्मन उपादानभूतादाबभूव तं परमात्मानं को वेद । न कोऽपि । प्रकृतितः परमाणुभ्यो वा जगज्जन्मेति हि बहवो भ्रान्ताः । तथा स एवोपादानभूतः परमात्मा स्वयमेव निमित्तभूतोऽपि सन् यदि वा दधे विदधे इदं जगत् ससर्ज यदि वा न ससर्ज । असंदिग्धे संदिग्धवचनमेतच्छास्त्राणि चेत्प्रमाणं स्युरिति यथा । स एव विदधे । तं को वेद । अजानन्तोऽपि बहवो जडात् प्रधानादकर्तृकमेवेदं जगत् स्वयमजायतेति विपरीतं प्रतिपन्ना विदधतो विधानमजानन्तोऽपि । स एव उपादानभूत इत्यपि को वेद । न कोऽपि । उपादानादन्यः तटस्थ एवेश्वरो विदधे इति हि बहवः प्रतिपन्नाः । देवा अपि यन्न जानन्ति तदर्वाचीनानामेषां तत्परिज्ञाने कैव कथेत्यर्थः । यद्येवं जगत्सृष्टिरत्यन्तदुरवबोधा न तर्हि सा प्रमाणपद्धतिमध्यास्त इत्याशङ्क्य तत्सद्भाव ईश्वरमेव प्रमाणयति यो अस्येति । "अस्य भूतभौतिकात्मकस्य जगतः "यः "अध्यक्षः ईश्वरः "परमे उत्कृष्टे सत्यभूते "व्योमन् "व्योमन्याकाशे आकाशवन्निर्मले स्वप्रकाशे । यद्वा ।। अवतेस्तर्पणार्थात् 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । 'नेड्वशि कृति' इतीट्प्रतिषेधः । 'ज्वरत्वर०' इत्यादिना वकारोपधयोः ऊट् । सप्तम्या लुक्। 'न ङिसंबुद्ध्योः' इति नलोपप्रतिषेधः ।। व्योमनि विशेषेण तृप्ते । निरतिशयानन्दस्वरूपे इत्यर्थः । यद्वा । अवति-इत्यर्थः । व्योमनि विशेषेण गते व्याप्ते । देशकालवस्तुभिरपरिच्छिन्न इत्यर्थः । अथवा । अवतिर्ज्ञानार्थः । व्योमनि विशेषेण ज्ञातरि विशिष्टज्ञानात्मनि । ईदृशे स्वात्मनि प्रतिष्ठितः । श्रूयते हि सनत्कुमारनारदयोः संवादे - 'स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि' (छा.उ.७.२४.१) इति । ईदृशो यः परमेश्वरः "सो "अङ्ग । अङ्गेति

प्रसिद्धौ । सोऽपि नाम "वेद जानाति । "यदि "वा "न "वेद न जानाति । को नाम अन्यो जानीयात् । सर्वज्ञ ईश्वर एव तां सृष्टिं जानीयात् नान्य इत्यर्थः ।। ७ ।।

सायणाचार्यस्य भाष्येण अत्र तर्कः, प्रश्नः, हेतुवादश्च सुतरां विज्ञायते । अत्र प्रश्नमुखेन कार्यकारणभावो मृग्यते एषैव जिज्ञासा, सम्प्रश्नः, तर्कः, हेतुवादश्च उत्तरोत्तरं विस्तृतिं प्राप्य न्यायदर्शनत्वेन प्रतिष्ठितम् । सर्वे दार्शनिकप्रश्नाः जिज्ञासया, हेतुवादैश्च परिपूर्णाः सन्ति । मनुष्याः वाऋषिषु उत्क्रामत्सुदेवान् अब्रुवन् । को न ऋषिर्भविष्यति इति । तेभ्य एतम् तर्कम् ऋषिम् प्रायच्छन् । निरु. १३,१२ इतिनिरुक्तेऽपि तर्कस्य माहात्म्यं प्रकीर्तितम् । यस्तर्केणानुसन्धत्ते स धर्मः इति तर्कस्य महत्त्वं मनुनाप्युदीरितम् । विज्ञानस्य प्रथमाधारस्तम्भः हेतुवादः, तर्कः । तर्कस्य, न्यायशास्त्रस्य भारते प्राचीनपरम्परा विद्यते । वैदिकवाङ्मये न्यायशास्त्रं पञ्चधाव्यापृतं विद्यते यथा पाणिनिव्याकरणशास्त्रे, मीमांसाशास्त्रे, वैशेषिकशास्त्रे, प्राचीनन्यायशास्त्रे, नव्यन्यायशास्त्रे च । न्यायशास्त्रस्य नैकान् ग्रन्थान् नैयायिकाः आचार्याः प्रणिन्युः । बौद्धानाम्, जैनानाम् अपि पुष्कलाः न्यायग्रन्थाः उपलभ्यन्ते । न्यायशास्त्रस्य सर्वशास्त्रोपकारकत्वं लोकप्रसिद्धम्[6] । संस्कृतवाङ्मये प्राचीनन्यायः नव्यन्यायः इति न्यायशास्त्रस्य विभागद्वयं प्रतिष्ठितम् ।

न्यायशास्त्रस्य तर्कशास्त्रस्य प्रमुखग्रन्थाः

| | | |
|---|---|---|
| 1. न्यायसूत्रम् | – | गौतममुनिः |
| 2. न्यायभाष्यम् | – | वात्स्यायनः |
| 3. न्यायवार्तिकम् | – | उद्योतकरः |
| 4. न्यायवार्त्तिकतात्पर्यटीका | – | आचार्य्योः वाचस्पतिमिश्रः |
| 5. न्यायसूत्रोद्धारः | – | वाचस्पतिमिश्रः |
| 6. न्यायसूचीनिबन्धः | – | वाचस्पतिमिश्रः |
| 7. तात्पर्यपरिशुद्धिः | – | न्यायाचार्यः उदयनः |
| 8. न्यायकुसुमाञ्जलिः | – | न्यायाचार्यः उदयनः |
| 9. न्यायपरिशिष्टः | – | न्यायाचार्यः उदयनः । |
| 10. लक्षणावली | – | न्यायाचार्यः उदयनः । |
| 11. आत्मतत्त्वविवेकः | – | न्यायाचार्यः उदयनः । |
| 12. न्यायमञ्जरी | – | जयन्तभटः |
| 13. तत्त्वचिन्तामणिः | – | गङ्गेशोपाध्यायः |

14. जागदीशी – जगदीशः

15. गादाधरी – गदाधरः

16. कारिकावली – विश्वनाथः

17. तर्कसंग्रहः – अन्नम्भट्टः

स्थालीपुलाकन्यायेन कतिपयग्रन्थानां नामानि दत्तानि, एतान्यतिरिच्य बौद्धजैनादिन्यायग्रन्थाः अपि सन्ति विस्तरभियात्र नाभिधीयन्ते ।

**गणितीयमापनम्** – विज्ञानस्य द्वितीयाधारस्तम्भः मापनम् (गणितीयमापनम्)। मापनं गणितमन्तरेण सर्वथा असम्भवम् । भारते अतिप्राचीनकालादेव गणितस्य समृद्धा परम्परा विद्यते । विज्ञानस्य प्रमाणीकरणाय गणितीयमापनमत्यन्तम् आवश्यकम् । गणितीयमापनमन्तरेण ज्ञानं विज्ञानत्वेन नाङ्गीक्रियते । गणितं नाम गणनं मापनम् । एतत् गणनं स्वीकृतमानदण्डैः क्रियते । गणनाय सर्वप्राचीनप्रमाणं वेदे दशमानपद्धतिसमन्विता समविषमसंख्याश्रेणी उपलभ्यते तद्यथा – **एका च मे तिस्रश्च मे तिस्रश्च मे पञ्च च मे पञ्च च मे सप्त च मे सप्त मे नव च मे नव च म एकादश च म एकादश च मे त्रयोदश च मे त्रयोदश च मे** ------ यजुर्वेद अ.१८ मन्त्र २४

तथा –

**चतस्रश्च मेऽष्टौ च मेऽष्टौ च मे द्वादश च मे द्वादश च मे षोडश च मे षोडश च मे विंशतिश्च मे विंशतिश्चमे चतुर्विंशतिश्च मे** ------ यजुर्वेद अ. १८ मन्त्र २५

संख्यानां विस्तृतिः अथवा गणनं परार्धपर्यन्तम् अर्थात् 1010 पर्यन्तं विद्यते ।

**एकं च दशं च शतं च सहस्रं च अयुतं नियुतं च प्रयुतं च अर्बुदं च मध्यं च अन्तश्च परार्धश्चैताः** -

**एकं दश च शतं च सहस्रं त्वयुत नियुते तथा प्रयुतम् ।**

**कोट्यर्बुदं च वृन्दं स्थानात् स्थानं दशगुणं स्यात् ॥** आर्यभट्टीयम् २.२

इह संख्या स्थानात् स्थानं दशगुणं वर्धते Place Value यथा –

एकम् = १० $^{०}$ = १

दश = १० $^{१}$ १० = १०

शतम् = १० $^{२}$ १० ×१० = १००

सहस्रम् = १० $^{३}$ १० ×१०×१० = १०००

अयुतम् = १० $^{४}$ १० ×१०×१०×१० = १००००

नियुतम् = १० $^{५}$ १० ×१०×१०×१०×१० = १०००००

प्रयुतम् = १० $^{६}$ १० ×१०×१०×१०×१०×१० = १००००००

अर्बुदम् = १० $^{७}$ १० ×१०×१०×१०×१०×१०×१० = १०००००००

मध्यम् = १० $^{८}$ १० ×१०×१०×१०×१०×१०×१०×१० = १००००००००

अन्त: = १० $^{९}$ १० ×१०×१०×१०×१०×१०×१०×१०×१० = १०००००००००

परार्ध: = १० $^{१०}$ १० ×१०×१०×१०×१०×१०×१०×१०×१०×१० = १००००००००००

रामायणे युद्धकाण्डे ३३-४३ श्लोकेषु तु गणनाय संख्या महौघ: $10^{62}$ पर्यन्तं प्रदत्तम् ।

| | | | |
|---|---|---|---|
| १ शंखम् | = १०$^{१२}$ | १ महापद्मम् | = १०$^{३७}$ |
| १ महाशंखम् | = १०$^{१७}$ | १ खर्वम् | = १०$^{४२}$ |
| १ वृन्दम् | = १०$^{२२}$ | १ महाखर्वम् | = १०$^{४७}$ |
| १ महावृन्दम् | = १०$^{२७}$ | १ समुद्र: | = १०$^{५२}$ |
| १ पद्मम् | = १०$^{३२}$ | १ ओघ: | = १०$^{५७}$ |
| | | १ महौघ: | = १०$^{६२}$ |

दशमानपद्धतौ शून्यमनिवार्यम् । शून्यस्य स्पष्टोल्लेख: प्रयोगश्च छन्दोवीचीति छन्द: शास्त्रे पिङ्गलाचार्य-प्रणीते ग्रन्थे उपलभ्यते । **गायत्रे षट्संख्यामर्थेऽपनीते द्वयङ्केऽवशिष्ट: ।**

**त्रयस्तेषु रूपमपनीय द्वयङ्कार्ध: शून्यं स्थाप्यम् ॥**

दशमानपद्धति: भारतीयानां स्वोपज्ञमिति विश्वस्मिन्विश्वे गणितज्ञै: सर्वैरङ्गीक्रियते ।

**पूर्णमद: पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।**

**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यत ॥** मुण्डकोपनिषद्

अस्मिन् मन्त्रे अनन्तस्य गुणकीर्तनं विहितं युगपदेव योगस्य Addition अपव्ययस्य Subtractions वर्णनमस्ति । साम्प्रतिककाले सङ्गणकेन सम्पूर्णं जगत् परिवर्तितम् । सङ्गणकस्य कार्यं प्रमुखतया सङ्केतद्वयेन प्रवर्तते । on – 1, Off – 0 संख्यारूपेण, पदरूपेण अस्ति नास्ति चेति । आभ्यां शून्यैकाभ्यां गणनाय या पद्धति:

विकसिता सा द्विसंख्यामानपद्धतिः Binary System इत्युच्यते । प्राचीनभारते गणनाय दशमानपद्धतिस्तु आसीदेव एतदतिरिच्य द्विसंख्यामानपद्धतेः चिह्नान्यपि छन्दःशास्त्रे विलोक्यन्ते इति शास्त्रविदां मतम् । पाश्चात्त्यजगति द्विसङ्ख्यामानपद्धतिं जर्मनीदेशस्य दार्शनिकः गाट् फ्रिड् **लिबनिझ** 1695, ईस्वीयाद्बे आविष्चकार । परन्तु तस्याः प्रयोगः इदानीं सङ्गणके प्रारब्धः । परमार्थतः संख्याद्वयमेव 0 शून्यम्, 1 एकञ्च गीतायामपि एतदेव प्रकारान्तरेण भावाभावपदाभ्यां सूचितं - **नासतो विद्यते भावो नाभावो विद्यते सतः ।**

**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥** गीता अ. २-१५

यथा - भावम् अस्तित्त्वम् एकम् इति अभावं शून्यमिति सूचयामः । एतस्य एकस्य समानपरिमाणे द्विगु-णितविस्तृतिं द्वे, द्वौ वा इति ब्रूमः १+१=२ । अस्यैव त्रिगुणितं त्रयः, त्रीणि इति वदामः १+१+१=३ । अस्यैव चतुर्गुणितं चत्वारि, इति वदामः १+१+१+१=४ । द्वितः एतत् सर्वम् एकस्यैव विस्तृतिर्विद्यते मूलं तु एकमेव ।

संस्कृतसंख्याभिः ज्ञायते यत् प्राचीनकाले भारतीयाः योगं +Addition, अपचयं Subtraction सम्यक् जानन्ति स्म इति प्रतिभाति तद्यथा -

दश च एकञ्च एकादश 10 + 1 = 11

दश च द्वौ च द्वादश 10 + 2 = 12,

एवमेव त्रयोदश, चतुर्दश इत्यत्रापि उत्तरोत्तरं विज्ञेयम् । तथैव एकोनविंशतिः, एकोनत्रिंशत्, एकोन-चत्वारिंशत् । एताः संख्याः परिशील्यन्ते चेत् अत्र अपचयप्रक्रियाघटिता, दृश्यताम् ....

एकोनविंशतिः - 19 एकम् ऊनं विंशतेः 20 - 1 = 19

एकोनत्रिंशत् 29, एकम् ऊनं त्रिंशतः 30 - 1 = 29

एकोनचत्वारिंशत् 39, एकम् ऊनं चत्वारिंशतः 40 - 1 = 39

योगस्य त्वरितप्रक्रिया गुणनं

अपचयस्य त्वरितप्रक्रिया भागाहारः ।

यथा - 2 + 2 + 2 + 2 + 2 = 10

2 X 5 = 10

एवमेव भागाहारे विज्ञेयम् ।

40 - 10 = 30 - 10 = 20

40/2 = 20

वेदाङ्गेषु कल्पशास्त्रस्य मध्यभूतं शुल्बसूत्रम् प्राचीनभारतस्य रेखागणितस्य ज्यामितेः मूलं विद्यते । मानवशुल्बसूत्रे बोधायनशुल्बसूत्रे च त्रिभुजस्य चतुर्भुजस्य क्षेत्रमानं कथं विधेयं तत्सर्वं वर्णितम् । पॅथागोरसप्रमेय नाम्ना प्रसिद्धस्य त्रिभुजप्रमेयस्य वर्णनं पॅथागोरसस्य जन्मनः प्राक् भारते बोधायनशुल्बसूत्रे वर्णितम् ।

त्रिकोणस्य लम्बस्य आयामस्थलवर्गस्य योगस्य वर्गमूलं कर्णं भवति । इति ।

$AB^2+BC^2=AC^2$ $AB = 3, BC= 4, AC= 5$




३×३+४×४=५×५
२५=२५

मानवशुल्बसूत्रेऽपि पॅथागोरसप्रमेयं समुपलभ्यते यथा –

**आयाममायामगुणं विस्तारं विस्तरेण तु ।**

**समस्य वर्गमूलं यत्तत्कर्णं तद्विदो विदुः ॥** मानव शु.सूत्र. १०-१०

एतद् अपि विद्वद्भिः प्रोच्यते यत् भारतीयसंख्यादशमानपद्धतिः देशेषु पाश्चात्यप्रसृतम्[९] इति । अत्र भाषा-विज्ञानमपि प्रमाणं विद्यते । यथा –

| | | | | | |
|---|---|---|---|---|---|
| ६ | षट् | Six | | | |
| ७ | सप्त | seven | सप्टेम्बर | ७ सप्तमः | |
| ८ | अष्ट | eight आक्ट्रायअष्टांश, | आक्टोबर | १० आक्टोपस | अष्टपदीअष्टमः |
| ९. | नव | nine | नवम्बर | ९ नवमः | |
| १०. | दश | deci(decimal system) | डीसेम्बर | १० दशमः | |

एभिः पूर्वोक्तैः ग्रन्थैः प्रमाणैः एतत् प्रमाणितं भवति यत् आधुनिकविज्ञानाय आधारभूतं कार्यकारणभाव-तर्कादि गणितश्च जीवातुभूतत्वेन विलसतः । अङ्कगणितम्, कलनगणितम्, बीजगणितम्, ज्यामितिः, त्रिकोणमितिः इत्यादिगणितविषयाः नकेषु ग्रन्थेषु प्रचुराणि प्रमाणसहितानि समुपलभ्यन्ते, नैके गणितग्रन्थाश्च भारतीयाचार्याणां साम्प्रतमपि उपलभ्यन्ते । तत्र केचन ग्रन्थाः प्रकाशिताः केचन पाण्डुलिपिरूपेण अप्रकाशिताः स्थिताः सन्ति । विषयेऽस्मिन् महद् अनुसन्धानमपेक्षितम् केवलं तमिलनाडुकेरलराज्ययोः तत्र पाण्डुलिपिग्रन्थसंग्रहेषु गणितविज्ञानादि-विषयकाः पाण्डु – 3500 लिपिग्रन्थाः[११]सन्ति । तेषु कतिपयप्रकाशिताः अन्ये अप्रकाशिताः सन्ति ।

## गणितपरम्परायाः आचार्याणां कतिपयाः प्रसिद्धरचनाः

| क्र.सं. | नाम | कृतिः | कालः |
|---|---|---|---|
| 1 | लगधः | वेदाङ्गज्योतिषम् | १३५० B.C. |
| 2 | आर्यभट्टः (प्रथमः) | आर्यभट्टीयम् | ४९९ खी. |
| 3 | वराहमिहिरः | पञ्चसिद्धान्तिका, बृहत्संहिता, | ५८७ खी. |
| 4 | लल्लाचार्यः | शिष्यधीवृद्धिदम् | ५९८खी. |
| 5 | जिनभद्रगणिः | विशेषावश्यकभाष्यम् | ५७५ खी. |
| 6 | ब्रह्मगुप्तः | ब्रह्मस्फुटसिद्धान्तः, खण्डखाद्यकम् | ६५८ खी. (५९८) |
| 7 | भास्कराचार्यः (प्रथमः) | महाभाष्यम्, लघुभाष्यम्, आर्यभट्टीयभाष्यम् | ६२९ खी. (५२२) |
| 8 | श्रीधरः | त्रिशतिका, | ७५० खी. |
| 9 | वीरसेनः | धवलाटीका, | ८१६ खी. |
| 10 | महावीराचार्यः | गणितसारसंग्रहः, | ८५० खी. |
| 11 | गोविन्दस्वामी | महाभास्करीयभाष्यम्, | ८५० खी. |
| 12 | पृथुदक्षस्वामी | ब्रह्मसिद्धान्त-वासनाभाष्यम् | ८६४ खी. |
| 13 | वटेश्वराचार्यः | वटेश्वरसिद्धान्तः, | ८८० खी. |
| 14 | मुञ्जलः | लघुमानसः, | ९३२ खी. |
| 15 | आर्यभट्टः (द्वितीयः) | महासिद्धान्तः, | ९५० खी. |
| 16 | अभयदेवसूरिः | टीकाः तथा नव-आगमाः, | १०१५-७५ खी. |
| 17 | नेमिचन्द्रः | गोमतसारः | १०११ खी. |
| 18 | श्रीपतिः | सिद्धान्तशेखरः, गण तथा यतितिलकः | १०३९ खी. (१०४५) |
| 19 | हेमचन्द्रसूरिः | अनुयोगद्वारवृत्तिः | ११०७ खी. |
| 20 | भास्कराचार्यः (द्वितीयः) | सिद्धान्तशिरोमणिः, लीलावती, बीजगणितम् | ११५० खी. (१११४) |
| 21 | माधवः (केरलगणितप्रवर्तकः) | गोलवादः, वेण्वारोहः, स्फुटचन्द्राप्तिः | १३४०-१४२५ खी. |
| 22 | महेन्द्रसुरी | यन्त्रराजा | (1351–1388 CE) |
| 23 | नारायणपण्डितः | गणितकौमुदी, | १३५६ खी. |

| 24 | परमेश्वरः | लीलावतीव्याख्या, गोलदीपिका | १४३० खी. |
|---|---|---|---|
| 25 | पद्मनाभः | यन्त्रराजाधिकारः | (1423 CE) |
| 26 | नीलकण्ठः | तन्त्रसङ्ग्रहः, | १४४४-१४४५ खी. |
| 27 | ज्येष्ठदेवः | युक्तिभाषा, | १४७५ खी. |
| 28 | शंकरः वरियारः | क्रियाक्रमकरी, | १५००-१५६० खी. |
| 29 | गणेशदैवज्ञः | बुद्धिविलासिनी, ग्रहलाघवम् | १५४५ खी. |
| 30 | अच्युतः | स्फुटनिर्णयः, उपरागक्रियाक्रमः | 1550-1621 CE |
| 31 | मुनीश्वराचार्यः | सिद्धान्तसार्वभौमः | १६२०खी. |
| 32 | पुतुमन सोमयाजी | कर्णपद्धतिः, | १६६०-१७४० खी. |
| 33 | शङ्करवर्मन | सद्रत्नमाला, | १८२३ खी. |
| 34 | श्रीनिवास रामानुजन | Highly Composite Numbers(thesis) | १८८७-१९२० खी. |
| 35 | भारती कृष्णतीर्थः | वैदिकमैथेमैटिक्स | १९५७ खी. |

**प्रयोगः ( पुनः परीक्षितुं शक्यम् )** - विज्ञानस्य तृतीयं तत्त्वं पुनः परीक्षणयोग्यम् (प्रयोगः) किमपि ज्ञानं तदानीमेव विज्ञानरूपेण अङ्गीक्रियते यदा पुनः तत्परीक्षिते सति समानं फलं प्राप्यते । प्राचीनभारतस्य विज्ञानं विकसितं प्रामाणिकं च आसीत् इति बहूनि प्रमाणानि सन्ति तद्यथा - आर्यभटीयग्रन्थः । अत्र आर्यभटः स्वीय आर्यभटीयग्रन्थे सूर्यं प्रति परिभ्रमणाय ग्रहाणामपेक्षितः कालः कलितः तन्मूल्यं परिणामो वा साम्प्रतिकात्याधुनिकासाधनैः कलितपरिणामेन सर्वथा साम्यं भजते यथा -

| **क्र.सं.** | **ग्रहाः** | **एकस्मिन्युगे ग्रहाणां परिक्रमाणां संख्या** | **ग्रहाणां सूर्यं परितः भ्रमणायापेक्षितकालः** | |
|---|---|---|---|---|
| | | | **आर्यभट्ट निष्पादितकालः** | **वर्तमानविज्ञाननिष्पादितकालः** |
| 1 | शनिः | १४६५६४ | २९.४७ वर्षाणि | २९.४६ वर्षाणि |
| 2 | गुरुः | २२९६८२४ | ११.८६ वर्षाणि | ११.८६ वर्षाणि |
| 3 | मंगलः | ३६४२२४ | ६८७ दिनानि | ६८७ दिनानि |
| 4 | पृथ्वी | ४३२०००० | ३६५.२६ दिनानि | ३६५.२६ दिनानि |
| 5 | शुक्रः | ७०२२३८८ | २२४.७ दिनानि | २२५ दिनानि |
| 6 | बुधः | १७९३७०२० | ८७.९७ दिनानि | ८८ दिनानि |

अनया सारण्या एतज्ज्ञायते यद् अस्मत्पूर्वाचार्यैः निष्पादितपरिणामाः साम्प्रतमपि प्रामाणिकत्वं भजन्ते अपि च विज्ञानाय अपेक्षितानां त्रयाणाम् मौलिकाधारस्तम्भानाम् अर्थात् 1. कार्यकारणभावः अथवा हेतुवादः, 2. गणितीयमापनम्, 3. प्रयोगः पुनः परीक्षणीयम् इत्यादीनां वर्णनं कृतम् । इमानि विस्तरशः प्रमाणोदाहरणादिभिः परीक्षितानि प्रमाणितानि च ।

प्रयोगमुखेन प्रमाणीकरणाय पूर्वकृतस्य परीक्षणाय संस्कृतशास्त्रेषु बहूनि प्रमाणानि प्रयोगान् अधिलक्ष्यैव विद्यन्ते । यथा – आयुर्वेदशास्त्रे प्रयोगाः प्रदत्ताः सन्ति । रसशास्त्रे पुष्कलाः प्रयोगाः विद्यन्ते यान् परीक्ष्य शास्त्रे वर्णितप्रयोगान् प्रमाणयितुं शक्नुमः । प्राचीनभारतस्य रसायनपरम्परां ज्ञातुं **P.C.Ray** द्वारा लिखितं **Hindu Chemistry** अपि च स्वामिसत्यप्रकाशमहोदयेन विरचितः 'प्राचीन भारत में रसायन का विकास' इति ग्रन्थः द्रष्टव्यः ।

प्राचीनभारते रसायनपरम्पराया आचार्याः तेषां ग्रन्थाश्च

**रसायनशास्त्रविकासकालक्रमः, ग्रन्थकर्त्ता, ग्रन्थकालः**

| क्र.सं. | ग्रन्थ | कर्त्तारचना | कालः |
|---|---|---|---|
| 1 | अपौरुषेयः | वेदाः | अज्ञात |
| 2 | याज्ञवल्क्यः | ब्राह्मणग्रन्थाः | ५००० |
| 3 | चरकः | चरकसंहिता | १८०० B.C. |
| 4 | सुश्रुतः | सुश्रुतसंहिता | १५०० B.C. |
| 5 | चाणक्यः | अर्थशास्त्रम् | ३०० B.C. |
| 6 | वाग्भट्टः | अष्टाङ्गहृदयम्, अष्टाङ्गसङ्ग्रहः | ३०० |
| 7 | भिक्षुगोविन्दः | रसहृदयतन्त्रम् | ७०० |
| 8 | नागार्जुनः | रसरत्नाकरः, रसेन्द्रमङ्गलः | ८०० |
| 9 | तीसटः | चिकित्साकलिका | ९०० |
| 10 | वृन्दः | वृन्दमाधवः (सिद्धयोगः) | ९७५ |
| 11 | अज्ञातः ? | रसार्णवः | ११०० |
| 12 | गोविन्दाचार्यः | रससारः | १२०० |
| 13 | काकचण्डीश्वरः | काकचण्डेश्वरीतन्त्रम् | १२०० |
| 14 | यशोधरः | रसप्रकाशसुधाकरः | १२०० |
| 15 | गोपालकृष्णः | रसेन्द्रसारसङ्ग्रहः | १२०० |
| 16 | ढुण्ढुकनाथः | रसेन्द्रचिन्तामणिः | १३०० |

| 17 | नित्यनाथसिद्धः | रसरत्नाकरः | १४०० |
|---|---|---|---|
| 18 | वाग्भट्टः | रसरत्नसमुच्चयः | १४०० |
| 19 | चूडामणिः | रसकामधेनुः | १५०० |
| 20 | शाङ्गर्धाराचार्यः | दिव्यरसेन्द्रसारः | १५०० |

एतान् ग्रन्थान् अतिरिच्य वास्तुरचनाग्रन्थाः कलाशिल्पपाककलाग्रन्थाः तत्र तत्र ग्रन्थालये, पाण्डुलिपिरूपेण प्रकाशितग्रन्थरूपेण च विराजन्ते । यत्र प्रयोगपुरस्सरं विषयाः निरूपिताः । तथैव प्राचीनभारते भौतिकविज्ञानविषयकं वैशेषिकं दर्शनम्, कृषिविज्ञानम् अधिकृत्य पाराशरकृषिशास्त्रम् विद्यते । सर्वमेतत् प्रायोगिकमेव विद्यते ।

एभिः पूर्वोक्तैः प्रमाणैः प्रमाणितं भवति यत् भारते पुराकालाद् आरभ्य विज्ञानस्याधारभूततत्त्वानां समृद्ध-परम्परा अवर्तत इति । आधुनिकविज्ञानविकासाय प्राचीनभारतीयर्षिमुनीनाम् आचार्याणां महद् योगदानं विद्यते इति न कोऽपि प्रज्ञापुरुषः तिरस्कर्तुं प्रभवति ।

कतिपयप्रश्नाः काश्चन समस्याश्च - केचन आक्षिपन्ति यत् प्राचीनं विज्ञानं समृद्धं चेत् तद् आविष्कृत्य किमर्थं न प्रकटीकुर्वन्ति । प्रयोगविषयाणां प्रायोगिकोपस्थापनं किमर्थं न कुर्वन्ति इति ।

एतस्य समाधानम् अधस्ताद्दीयते –

1. विज्ञानपरम्परा मध्यकाले क्वचित् खण्डिता क्वचिन्नष्टा, तन्मध्यविद्यमानमन्तरालं बाधां जनयति ।
2. प्रतिशास्त्रं पारिभाषिकपदावली भिद्यते । पदावल्याः स्पष्टीकरणाभावे शास्त्रं दुर्बोध्यं सञ्जातम् ।
3. सूत्राणां नियमानां सिद्धान्तानां क्वचित्सप्रमाणम् उपपत्तयः न सन्ति ।
4. केषाञ्चन टीकाग्रन्थानामनुपलब्धता ।
5. केचनखण्डितग्रन्थाः, नष्टग्रन्थानां सन्दर्भाः विद्यन्ते ।
6. आक्रान्तृभिः लुण्ठाकैः प्राकृतिकप्रकोपोपप्लवादिभिः नैके ग्रन्थाः ग्रन्थालया नष्टाः ।
7. विज्ञानस्य प्रायोगिकपरम्परायाः लोपः ।
8. शास्त्रीयसंस्कृतभाषाबोधस्याभावः शिक्षायाः माध्यमं आङ्ग्लभाषा, अनुसन्धानस्याभावः ।
9. अतिपरिश्रमसाध्यम् ।
10. समाजस्य शासनस्य च उदासीनभावः, प्रोत्साहनस्याभावः ।
11. आङ्ग्लभाषाशिक्षायाः माध्यमं, पाश्चात्त्यशिक्षाव्यवस्था च ।
12. पाठ्यक्रमे भारतीयाचार्याणां तेषां कृतीनां ग्रन्थानां वर्णनं नगण्यमेव ।

**उपसंहारः** – पूर्वोक्तासु समस्यासु विद्यमानास्वपि साम्प्रतमपि प्राचीनविज्ञानपरम्परा क्वचिज्जीवति एव यथा – आयुर्वेदे, योगशास्त्रे, रसशास्त्रे, स्थापत्यशास्त्रे च । इमानि शास्त्राणि प्रयोगप्रधानानि सन्ति । सिद्धान्त-शिरोमणिः इति ग्रन्थे यन्त्राध्याये[१२] खगोलीययन्त्राणां वर्णनमुपलभ्यते । यन्त्रसर्वस्वग्रन्थेऽपि यन्त्रवर्णनमस्ति । यद्यपि समस्याः बह्व्यः सन्ति परम्परा खण्डिता, ग्रन्थाः नष्टाः पुनरपि समष्टिप्रयत्नेन दुःसाध्यमपि एतत् सुशकं भवितुमर्हति पुनः प्राचीनविज्ञानं सुप्रतिष्ठितं भवितुमर्हति । भारतीयविज्ञानं प्रकृत्यनुकूलं विश्वहिताय सर्वमानव-कल्याणाय प्रभवति इति हेतोः प्रयत्नेन एषा विज्ञानपरम्परा रक्षणीया ।

**सन्दर्भाः** –


1. वेनस्तत्पश्यन्निहितं गुहासद्, यत्र विश्वं भवत्येकनीडम् । तस्मिन्नदं संचविचौति सर्वं, सओत, प्रोतश्च विभूःप्रजासु ।। यजु.३२. ८
2. द्रष्टव्यः – हिन्दी शिल्पशास्त्र भाग १,लेखक– कृष्णाजी विनायक वझे १९२८ ।
3. द्रष्टव्यः – 'History of Indian Economy'– Contours of the World Economy 1-2030 AD. Essays in Macro-Economic History - Angus Maddison - Publication Date - December 2007.
4. विज्ञानं ब्रह्म चेद्वेद । तैत्तिरीयोपनिषद् – ब्रह्मानन्दवल्ली, अनुवाक ५, मन्त्र १ ।
5. मोक्षेधीः ज्ञानम् , अन्यत्रविज्ञानं शिल्पशास्त्रयोः इत्यमरकोशः ।
6. अथर्व.२.१.३ ।
7. ऋग्वेद १०.१२१.१ ।
8. काणादञ्च पाणिनीयञ्च सर्वशास्त्रोपकारकम् ।
9. The Persian mathematician Al-Khwarizmi, whose book On the Calculation with Hindu Numerals was written about 825 A.D., and the Arabmathematician Al-Kindi, who wrote four volumes "On the Use of the Indian Numerals" (Ketab fi Isti'mal al-'Adad al-Hindi) about 830 A.D.
   संख्यायाः द्विसंख्यामानस्य च कृतेप्राचीनभारतीयप्रमाणानि द्रष्टुं इमे पुस्तके द्रष्टव्ये
   1. Computing science in ancient-India, By Subhash Kak.
   2. Numbers and numerals in Sanskrit works., By Venkatesh Murthy.
   3. Calculus the Real Story – Prof. C. K. Raju youtube.

10. प्राचीनरोमनकॅलेण्डरमध्ये जनवरीमासम् आरभ्य डिसेम्बरपर्यन्तं दशमासाः आसन्परन्तुजुलै, अगस्ट इति मासद्वयं तत्रनासीत् अतः पूर्वोक्तनामानि युज्यन्तेस्म । परन्तु यदाजूलियससीजर आगस्टस् इति भूपतिभ्यां रोमनकलेण्डरमध्ये संशोधनं विधाय स्वीय नाम्नाजुलै, अगस्ट इति मासद्वयं योजितं परिणामतः सप्तममासः सेप्टेम्बर नवममासः सञ्जातः अपिच तदुत्तरवर्ति मासाअपि अग्रेसारिताः अभवन् ।
11. Science teñts in Sanskrit in the manuscripts repositories of kerala and Tamilnadu Published by Rashtriya Sanskrit Sansthan Delhi.
12. स्वयंवहयन्त्रम् --

    लघुदारुजसमचक्रे समसुषिराराः समान्तरा नेम्याम् ।

    किञ्चिद्वक्रा योज्याः सुषिरस्याधः पृथक् तासाम् ।। सि. शि. यन्त्र. ५०।।

    रसपूर्णे तच्चक्रं द्वयाधाराक्षस्थितं स्वयं भ्रमति । (प्रथमम्)

    उत्कीर्य नेमिमथवा परितो मदनेन संलग्नम् ।।

    तदुपरि तालदलाद्यं कृत्वा सुषिरे रसं क्षिपेत् तावत् ।

    यावद्रसैकपार्श्वे क्षिप्तजलं नान्यतो याति ।।

    पिहितश्छिद्रं तदतश्चक्रं भ्रमति स्वयं जलाकृष्टम् । सि. शि. यन्त्र. ५१-५२ ।।

**सन्दर्भग्रन्थाः**


1. आर्यभट्टीयम् ,आर्यभट्टः प्रथमः, टीका. - के. एस. शुक्ल तथा के. वी. शर्मा, भारतीय राष्ट्रीय विज्ञान अकादमी, नवदेहली, १९७६ ।
2. सिद्धान्तशिरोमणिः, भास्कराचार्यः, सम्पादकः - बापूदेवशास्त्री, वासना-भाष्यम्, चौखम्बा संस्कृत संस्थान, वाराणसी, वि. सं. २०५६ ।
3. बृहत्संहिता, वराहमिहिराचार्यः, (द्वितीयोभागः), भट्टोत्पलविवृत्तिः, संपा. सुरकान्त झा, चौखम्बा संस्कृत सीरीज आफिस, वाराणसी, प्र. सं. २००८ ।
4. लीलावती, भास्कराचार्यः, सं. पं. सीत्ताराम झा, चौखम्बा सुरभारती प्रकाशन, वाराणसी, २०११, विलासिनी-टीका ।
5. ग्रहलाघवम्, गणेशदैवज्ञ, सम्पा. ब्रह्मानन्द त्रिपाठी, चौखम्बा सुरभारती प्रकाशन, वारणसी, १९९५ ।
6. रसरत्नसमुच्चयः, वाग्भटः, डा. जोशी, भारतीय राष्ट्रिय विज्ञान अकादमी, नवदेहली, १९९२ ।
7. रसामृतम्, त्र्यम्बकनाथ शर्मा, चौखम्बा संस्कृत सीरीज, वाराणसी, २००१ ।

8. रसार्णवम्, संपा. प्रफुल्ल चन्द्र राय तथा हरीश चन्द्र कविरत्न, द एशियाटिक सोसायटी, कलकत्ता, पुनः प्रकाशन १९८५ ।
9. रसशास्त्र, एस. एस. डोले, वैभव अनमोल प्रकाशन, पुणे ।
10. रसेन्द्रपुराणम्, रामप्रसाद विद्योपाध्याय, खेमराज श्रीकृष्णदास, मुम्बई, २००० ।
11. मयमतम्, मयः, टीका. शैलजी पाण्डेय, चौखम्बा सुरभारती प्रकाशन, वाराणसी, पु.मु. २०११ ।
12. समराङ्गणसूत्रधारः, भोजः, सम्पा. डा. सुधाकर मालवीय, तथा पं. चित्तरञ्जन मालवीय, चौखम्बा संस्कृत भवन, वाराणसी, प्र.सं., २०६८ वि. ।
13. समराङ्गणसूत्रधार, म. म. टी. गणपति शास्त्री, ओरियन्टल इन्स्टीट्यूट बडौदा, १९६६ ।
14. सुश्रुतसंहिता, व्या. डा. अनन्तराम शर्मा, चौखम्बा सुरभारती प्रकाशन, वाराणसी, भाग - १, २०१५ ।
15. चरकसंहिता, महर्षि अग्निवेश प्रणीत, अनु. अत्रिदेवगुप्त, भार्गव पुस्तकालय गयाघाट बनारस, प्रथम खण्ड, द्वितीय खण्ड, द्वितीय संस्करण, १९४८ ।
16. ऋग्वेदसंहिता, अनु. डा. भीष्मदत्तशर्मा, चौखम्बा कृष्णदास अकादमी, वाराणसी, २०१२ ।
17. रामायणम्, सं. कट्टी श्रीनिवासशास्त्री, परिमल पब्लिकेशन, दिल्ली, प्रथमो भागः (बालकाण्डम्), पुनर्मुद्रणम् - १९९१ ।
18. दर्शनशास्त्र की परम्परा में भौतिक विज्ञान, डा. सुद्युम्न आचार्य, वेद वाणी वितान, प्राच्य विद्या शोध संस्थान, सतना, (म.प्र.) प्र. सं. २०१५ ।
19. वेद विद्या निदर्शन, पं. भगवद्दत्त, सम्पा. सत्यश्रवा, दयानन्द सरस्वती अनुसन्धान आश्रम, प्रणव प्रकाशन, नवदेहली, द्वि. सं. २००५ ।
20. The Positive Sciences of The Ancient Hindus, Brajendranath Seal, Motilal Banarasidas Publishers, Delhi, Reprint 1991.
21. Science & Technology in India Through the Ages, Academy of Sanskrit Research, Melkote, Karnataka, 2003.
22. Hindu Chemistry, P. C. Roy, Presidency College Kolkata, 1902.



**आचार्यः ( शिक्षाशास्त्रविभागः )**

**केन्द्रीयसंस्कृतविश्वविद्यालयः**

**श्रीसदाशिवपरिसरः, पुरी**




# अद्वैतवेदान्तदृष्ट्या लक्षणाविचारः

✍ डा.जि.नरसिंहुलु

**( परमतत्त्वविचारार्थप्रवृत्तसकलदर्शनशास्त्रमौलिमाल्यस्वरूपाद्वैतवेदान्तदर्शनपारङ्गतेन विदुषा शोधपत्रेऽस्मिन्नद्वैतवेदान्तनिरूपितलक्षणास्वरूपं सभेदं सविवेकञ्चोपपादितम्, तत्राऽपि कथं 'तत्त्वमसि' इत्यादिवाक्येषु लक्षणासमन्वयनम्, एतत्सर्वं सविशदं सप्रपञ्चञ्च विवर्णितमस्ति, यदनुसन्धानेन विवृताङ्गरूपा काचिद्विशिष्टा वृत्तिर्लक्षणा स्वयमेव पत्रानुसन्धातॄणां बुद्धिपथमवतरतीति नास्त्यत्र कश्चिच्छङ्काकलङ्कपङ्कावकाशः।)**

इह खलु धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थः । **न स पुनरावर्तते**[1] इति श्रुत्या तस्य नित्यत्वश्रवणात् । परमपुरुषार्थरूपो मोक्ष आत्मज्ञानादेव भवतीति **तरति शोकमात्मवित्**[2], **ब्रह्म वेद ब्रह्मैव भवति**[3] इत्यादीनि श्रुतिवाक्यानि जोघुष्यन्त । अपि च जीवब्रह्मैक्यमेव अद्वैतवेदान्तदर्शनस्य मुख्यः सिद्धान्त इत्यपि तत्त्वमस्यादिमहावाक्यावबोधनेन ज्ञायते । एवमत्र अद्वैतवेदान्ते तत्त्वमसीति महावाक्यावबोधो लक्षणामङ्गीकृत्य भवतीति तदिदमत्र विचार्यते । वेदान्तपरिभाषायामागमपरिच्छेदे पदार्थश्च द्विविधः शक्यो लक्ष्यश्चेति । तत्र शक्तिर्नाम पदानामर्थेषु मुख्या वृत्तिः, यथा घटपदस्य पृथुबुध्नोदराद्याकृतिविशिष्टे वस्तुविशेषे वृत्तिः । सा च शक्तिः पदार्थान्तरम् । सिद्धान्ते कारणेषु कार्यानुकूलशक्तिमात्रस्य पदार्थान्तरत्वात् । इत्येवं रीत्या शक्तिपदार्थं प्रतिपाद्य लक्षणां निरूपयति ।

अथ लक्ष्यपदार्थो निरूप्यते । तत्र लक्षणाविषयो लक्ष्यः । **लक्षणा च द्विविधा - केवललक्षणा लक्षितलक्षणा चेति** । तत्र शक्यसाक्षात्सम्बन्धः केवललक्षणा यथा गङ्गायां घोष इत्यत्र प्रवाहसाक्षात्सम्बन्धिनि तीरे गङ्गापदस्य केवललक्षणा[4] ।

शक्तिः लक्षणा चेति द्वावपि पदार्थौ शब्दसम्बन्धरूपवृत्ती भवतः । अनयोर्मध्ये यः पदार्थ आदावुपस्थितः ज्ञातः भवति, तेन सह पदस्य मुख्यः सम्बन्धः भवति । एतदेवोक्तं शक्तिर्नाम पदानामर्थेषु मुख्या वृत्तिरिति । ततश्च मुख्यसम्बन्धकथनेन अमुख्यसम्बन्धोऽपि प्रतीतो भवति । अमुख्यसम्बन्धस्तु पदानां श्रवणसमनन्तरमेव मुख्यत्वेन यत्ज्ञानं न भवति किन्तु लक्ष्यार्थस्य शक्यार्थेन सम्बन्धज्ञानात्परं यत्ज्ञानं समुत्पद्यते, तदेव लक्षणावृत्तिरित्युच्यते । अत एवोक्तं **'शक्यसम्बन्धो लक्षणा'** इति । पदानां वास्तविकार्थस्य बोधः मुख्यवृत्या एव भवतीति सर्वत्र स्वीक्रियते, परन्तु यत्र मुख्यवृत्तेः संभव एव न भवति तत्र अमुख्यवृत्तिः (लक्षणा) स्वीकार्या भवति ।

उच्यते च -

**मानान्तरविरोधे तु मुख्यार्थस्यापरिग्रहे ।**
**मुख्यार्थेनाविनाभूते प्रवृत्तिर्लक्षणेष्यते ॥**[5]

यत्र अन्यप्रमाणैमख्यार्थस्य विरोधे सति मुख्यार्थ: अस्वीकार्यो भवति, तत्र मुख्यार्थेन अविनाभूत: (नित्य-सम्बद्ध:) अर्थ: कल्प्यत इति लक्षणा । यथा गङ्गायां घाष: इत्यत्र गङ्गापदस्य मुख्यार्थो भवति प्रवाह: । परन्तु प्रवाहे ग्राम: स्थातुं नार्हतीति मुख्यार्थस्य प्रवाहस्य प्रत्यक्षप्रमाणविरोधो भवति । अत: मुख्यार्थं परित्यज्य मुख्यार्थेन सह संयोगसंबन्धेन नित्यसम्बद्ध: तीररूपार्थ: कल्प्यते ।

**केवललक्षणा** - शक्यसाक्षात्सम्बन्ध: केवललक्षणा । शक्यार्थस्य(वाच्यार्थस्य) साक्षात्सम्बन्धो यत्र भवति तत्र केवल- लक्षणा, यथा गङ्गायां घोष इत्यत्र प्रवाहसाक्षात्सम्बन्धिनि तीरे गङ्गापदस्य केवललक्षणा ।[6]

**लक्षितलक्षणा** - यत्र शक्यपरम्परासम्बन्धेनार्थान्तरप्रतीतिस्तत्र लक्षितलक्षणा, यथा द्विरेफपदस्य रेफद्वये शक्तस्य भ्रमरपद- घटितपरम्परासम्बन्धेन मधुकरे वृत्ति: ।[7]

अत्र द्विरेफशब्दश्रवणसमनन्तरमेवे मधुकरार्थस्य प्रतीतिजायते, किन्तु मधुकरो द्विरेफशब्दस्य वाच्यार्थो न भवति । यतो हि 'द्वि' इत्यस्य द्वयमिति 'रफ:' इत्यस्य रकार इत्येव वाच्यार्थो भवति । अतो द्विरेफपदस्य 'यस्मिन् शब्दे रेफद्वयं स्यात् स शब्द:' इत्यस्मिन्नर्थे लक्षणा स्वीकार्या, किन्त्वनेन 'शर्करा' इत्यादिरेफद्वययुक्तपदानां ग्रहणं भवेदिति एतद्वारणाय भ्रमररूपार्थे एव निरूढलक्षणा वक्तव्या । भ्रमरपदस्य भ्रमररूपार्थेन शक्तिसंबन्धो भवतीत्यतो मधुकरार्थस्य प्रतीति: भवति । अर्थात् द्विरेफपदस्य रेफद्वयरूपेऽर्थे शक्तिरूपसम्बन्ध:, तथा च रेफद्वयमित्यस्य लक्षणया भ्रमरपदेन सम्बन्ध:, भ्रमरपदस्य च मधुकररूपार्थेन शक्तिसम्बन्ध इत्येवंरीत्या परम्परासम्बन्धेन द्विरेफपदस्य मधुकरार्थप्रतीतिर्भवति ।

द्विरेफपदस्य भ्रमरूपार्थ:, इति लक्षणया एव भवति, किन्तु गङ्गायां घोष: इत्यत्र यथा प्रवाह-रूपवाच्यार्थस्य तीररूपलक्ष्यार्थेन साक्षात् संयोगसम्बन्धो भवति न तथा अत्र द्विरेफपदस्य यो वाच्यार्थो रेफद्वयमिति तस्य भ्रमररूपार्थेन मधुकररूपार्थेन वा न साक्षात्सम्बन्ध: कश्चिद्वर्तते । परन्तु द्विरेफपदलक्षितस्य भ्रमरपदस्य रेफद्वयविशिष्टभ्रमरार्थेन सह सम्बन्धो भवतीति कारणादियं शक्यपरम्परासम्बन्धरूपा लक्षितलक्षणा इत्युच्यते । तथा च शक्यभ्रमरपदप्रतिपाद्यस्य द्विरेफपदस्य मधुकररूपार्थेन सह सम्बन्धो भवति । अस्मिन् सम्बन्धे भ्रमर: पदघटक: (अवयव:) भवतीत्ययं सम्बन्ध: भ्रमरपदेन घटित इत्युच्यते ।

केचन शब्दस्य शक्तिलक्षणा गौणी चेति तिस्रो वृत्तय इत्यङ्गीकृत्य शक्यो लक्ष्यो गौणश्चेति पदार्थोऽपि त्रिविधो इति ब्रुवन्ति । परिभाषाकारस्तु पदार्थश्च द्विविधः इत्युक्त्वा तन्मतं निराकृतवान् । अपि च गौणीवृत्ते-लक्षितलक्षणायामेवान्तर्भावात् तद्वृत्तिविशिष्टस्य गौणपदार्थस्य पृथक्कल्पनमानावश्यकमित्यवोचत् ।

प्रकारान्तरेण लक्षणा त्रिविधा - जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा चेति । वेदान्तसारग्रन्थे महावाक्यार्थविचारे तत्त्वमसीति वाक्यं सम्बन्धत्रयेणाखण्डार्थबोधकं भवतीत्युक्तम् । सम्बन्धत्रयं नाम पदयोः सामानाधिकरण्यं, पदार्थयोविशेषणविशेष्यभावः, प्रत्यगात्मनोलक्ष्यलक्षणभावश्चेति । तदुक्तम् -

**सामानाधिकरण्यञ्च विशेषणविशेष्यता ।**

**लक्ष्यलक्षणसंबन्धः पदार्थप्रत्यगात्मनाम् ॥**[8] इति ।

एवं च ग्रन्थकारः प्रत्येकं सोदाहरणं क्रमशो विवेचयन् लक्ष्यलक्षणभावमित्थं निरूपयति । तद्यथा-

लक्ष्यलक्षणसम्बन्धस्तु यथा सोऽयं देवदत्तः, इति वाक्ये सशब्दायं शब्दयोस्तदर्थयोर्वा विरुद्धतत्कालै-तत्कालविशिष्टपरित्यागेनाविरुद्धदेवदत्तेन सह लक्ष्यलक्षणभावः । तथा अत्रापि तत्त्वमसीति वाक्ये **तत्त्वंपदस्तदर्थ-योर्वा** विरुद्धपरोक्षत्वापरोक्षत्वादिविशिष्टत्वपरित्यागेन अविरुद्धचैतन्येन सह लक्ष्यलक्षणभावः । इयमेव भागलक्षणे-त्युतच्यते ।[9] उक्तं च -

**तत्त्वमस्यादिवाक्येषु लक्षणा भागलक्षणा ।**

**सोऽयमित्यादिवाक्यस्थपदयोरिव नापरा ॥** इति ।

अस्या अपरं नाम भवति जहदजहल्लक्षणा इति ।

सम्प्रति लक्षणात्रयं विचार्यते -

1. **जहल्लक्षणा** - वाच्यार्थमशेषतः परित्यज्य तत्सम्बन्धिनि अर्थान्तरे वृत्तिः , यथा गङ्गायां घोषः ।
2. **अजहल्लक्षणा** - वाच्यार्थापरित्यागेन तत्सम्बन्धिनि वत्तिः, यथा शोणो धावति ।
3. **जहदजहल्लक्षणा** - वाच्यार्थैकदेशपरित्यागेनैकदेशवृत्तिः, यथा सोऽयं देवदत्तः ।

**महावाक्यार्थनिरूपणम्** - तत्त्वमसीति वाक्ये नीलमुत्पलमिति वाक्यवद्वाक्यार्थो न संगच्छते । तत्र तु नील-पदार्थनीलगुणस्य उत्पलपदार्थोत्पलद्रव्यस्य च शौक्ल्यपटादिभेदव्यावर्तकतयाऽन्योन्यविशेषणविशेष्यभावसंसर्गस्य अन्यतरविशिष्टस्यान्यतरस्य तदैक्यस्य वा वाक्यर्थत्वाङ्गीकारे प्रमाणान्तरविरोधाभावात्तद्वाक्यार्थः सङ्गच्छते ।

ननु नीलोत्पलवाक्येऽपि स्यादखण्डार्थता नेत्याह तत्रेति । शौक्ल्यादिव्यावर्तकनीलगुणस्य पदादिव्यावर्त-कोत्पलद्रव्यस्य च गुणगुणिभावेन विरोधाभावात्तत्संसर्गैक्यस्य वा तदन्यतरविशिष्टस्यान्यतरस्य वा वाक्यार्थत्वान्ना-खण्डार्थत्वं मुख्यैक्यस्य तत्राविवक्षितत्वादित्यर्थः ।

अत्र तु तदर्थपरोक्षत्वादिविशिष्टचैतन्यस्य त्वमर्थापरोक्षत्वादिविशिष्टचैतन्यस्य चान्योन्यभेदव्यावर्तकतया वि-शेषणविशेष्यभावसंसर्गस्यान्यतरविशिष्टस्यान्यतरस्य तदैक्यस्य च वाक्यर्थत्वाङ्गीकारे प्रत्यक्षादिप्रमाणविरोधाद्वाक्यार्थो न संगच्छते । तदुक्तम् -

**संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र सम्मतः ।**

**अखैण्डैकरसत्वेन वाक्यार्थो विदुषां मतः ॥** इति ।

एतदुक्तं भवति - न तावत्तत्त्वमर्थयोर्नीलोत्पलवत्गुणगुणोभावः, उभयोरपि द्रव्यत्वात् । नापि कुण्डल-सुवर्णवत्कार्यकारणभावो नित्यत्वादविकृतत्वाच्च । नापि **भूम्यूषरादिवदंशाशिभावो** निरवयवत्वात् । नापि क्रियात-द्वद्भावो बाणादिवन्निष्क्रियत्वात् । नापि गोत्वशाबलेयादिवज्जातिव्यक्तिभावो द्रव्यत्वादेव । अत एव न विशेषण-विशेष्यभावोऽपि । वस्तुतस्त् विज्ञानघनमात्रत्वावधारणान्नेति नेतीत्यशेषविशेषप्रत्याख्यानेन निर्धर्मकत्वावधारणाच्च न केनापि प्रकारेण तत्त्वमस्यादिवाक्यानां संसृष्टाथनिष्ठतवशङ्कावकाशं लभते । न चेदं वाक्यं त्वमिन्द्रोऽसीति-वत्स्तुतिपरं नवकृत्वोऽभ्यासवैर्थ्यप्रसङ्गात् । न हि स्तुतिः पुनः पुनः परिचोदनापूर्वकं क्वचिदभ्यस्यते । अत एव नार्थवादोऽनन्यशेषत्वाच्च । न ह्यस्मिन्प्रकरणेऽन्यत्किञ्चित्प्रधानवाक्यमुपलभ्यते । यच्छेषत्वेनेदमर्थवादरूपं भवेत् । नापि राजपुरुषे राजायमितिवद् औपचारिकमप्रमितभेदयोरैक्यस्यौपचारिकत्वानुपपत्तेः । नापि विपर्ययः संशयो वात्र सम्भवति श्रुतेः स्वतःप्रामाण्यात् । तस्मात्तत्त्वमस्यादिवाक्यम् अखण्डार्थनिष्ठमकार्यकारणद्रव्यमात्रनिष्ठत्वे सति समानाधिकरणवाक्यत्वात् सोऽयं देवदत्त इति वाक्यवदिति । तदेवं पदयोरखण्डार्थनिष्ठत्वेन समानाधिकरण्यं वा वाच्यार्थांशे विरोधाद्विना लक्षणा न सङ्गच्छत इत्युक्तम् ।

एवं चात्र 'गङ्गायां घोषः प्रतिवसति' इति वाक्यवज्जहल्लक्षणापि न संगच्छते । तत्र तु गङ्गा-घोषयोराधाराधेयभावलक्षणस्य वाक्यार्थस्याशेषतो विरुद्धत्वाद्वाक्यार्थमशेषतः परित्यज्य तत्सम्बन्धितीरलक्षणाया युक्त-त्वाज्जहल्लक्षणा संगच्छते । अत्र तु परोक्षापरोक्षचैतन्येकत्वलक्षणस्य वाक्यार्थस्य भागमात्रे विरोधात् भागान्तरमपि परित्यज्यान्यलक्षणया अयुक्तत्वात् जहल्लक्षणा न संगच्छते । न च गंगापदं स्वार्थपरित्यागेन तीरपदार्थं यथा लक्षयति तथा तत्पदं त्वम्पदं वा स्वार्थपरित्यागेन त्वम्पदार्थं तत्पदार्थं वा लक्षयत्यतो न कुतो जहल्लक्षणा न संगच्छत इति वाच्यम् । तत्र तीरपदाश्रवणेन तदर्थाप्रतीतौ लक्षणया पुनरन्यतरपदेनान्यतरपदार्थप्रतीत्यपेक्षाभावात् ।

अस्यायमर्थस्तत्त्वमसीति वाक्ये तत्पदं त्वंपदं चोभयं श्रूयमाणमिति ताभ्यां मुख्यतयैव सर्वज्ञत्वाल्पज्ञ-त्वादिविशिष्टरूपतदर्थप्रतीतौ मुख्यार्थबाधासंभवात् लक्षणया तत्पदेन त्वंपदार्थस्य, त्वंपदेन तत्पदार्थस्य वा प्रतीतेर-पेक्षाभावात् जहल्लक्षणा न संभवति ।

अत्र तत्त्वमसीति वाक्ये 'शोणो धावति' इति वाक्यवदजहल्लक्षणापि न संभवति । तत्र शोणगुणगमन-लक्षणस्य वाक्यार्थस्य विरुद्धत्वात्तदपरित्यागेन तदाश्रयाश्वादिलक्षणया तद्विरोधपरिहारसंभवादजहल्लक्षणा संभवति । अत्र तु परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वस्य वाक्यार्थस्य विरुद्धत्वात्तदपरित्यागेन यस्य कस्यचिदर्थस्य लक्षित-त्वेऽपि तद्विरोधपरिहारासंभवादजहल्लक्षणा न संभवत्येव । न च तत्पदं त्वंपदं वा स्वार्थविरुद्धांशपरित्यागेन अंशा-न्तरसहितं त्वंपदार्थं तत्पदार्थं वा लक्षयत्यतः कथं प्रकारान्तरेण भागलक्षणामङ्गीकरणमिति वाच्यम् । एकेन पदेन स्वार्थांशपदार्थान्तरोभयलक्षणया असम्भवात्पदान्तरेण तदर्थप्रतीतौ लक्षणया पुनस्तत्प्रतीत्यपेक्षाभावाच्च ।

अस्येदं तात्पर्यम् - एकेनैव तत्पदेन परित्यक्तस्य विरुद्धांशपरोक्षत्वादिरूपार्थस्य चैतन्यरूपान्यतरपदार्थस्य च बोधनायोभयलक्षणाया असंभवात् । अतः शोणो धावतीत्यत्र यथा शोणशब्दः स्वार्थबोधनपूर्वकं लक्षणया नील-पीताद्यर्थावबोधनासमर्थस्तथैवात्र तत्त्वं पदयोरन्यतरल्लक्षणया स्वार्थपरार्थोभयावबोधनासमर्थम् । किञ्च इह यदा तत्पदं त्वं-पदञ्चोभयं श्रूयमाणं तदा ताभ्यामभिधयैव तदर्थप्रतीतौ लक्षणया अन्यतरपदेनान्यतरार्थस्य प्रतीत्यपेक्षा न भवति ।

तस्माद्यथा 'सोऽयं देवदत्तः' इति वाक्यं तदर्थो वा तत्कालैतत्कालविशिष्टदेवदत्तलक्षणस्य वाक्यार्थस्यांशे विरोधात्, विरुद्धतत्कालैतत्कालविशिष्टत्वांशं परित्यज्याविरुद्धं देवदत्तांशमात्रं लक्षयति तथा 'तत्त्वमसि' इति वाक्यं तदर्थो वा परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वलक्षणस्य वाक्यार्थस्यांशे विराधात्, विरुद्धपरोक्षत्वापरोक्षत्वादिविशि-ष्टत्वांशं परित्यज्य अविरुद्धमखण्डचैतन्यमात्रं लक्षयतीति जहदजहल्लक्षणा । इत्थं वेदान्तसारग्रन्थे सदानन्दयोगी-न्द्रैलक्षणात्रयं विवृतम् । पञ्चदश्यामपि महावाक्यार्थ इत्थं प्रदर्शितः, तद्यथा -

**एकमेवाद्वितीयं सन्नामरूपविवर्जितम् ।**
**सृष्टेः पुराऽधुनाप्यस्य तादृक्त्वं तदितीर्यतेन ॥**
**श्रोतुर्देहेन्द्रियातीतं वस्त्वत्र त्वम्पदेरितम् ।**
**एकता ग्राह्यतेऽसीति तदैक्यमनुभूयताम् ॥** इति ।

वेदान्तपरिभाषायामपि धर्मराजाध्वरीन्द्रो लक्षणात्रयं विविच्य तत्त्वमसीत्यादौ तत्पदवाच्यस्य सर्वज्ञत्वादि-विशिष्टस्य त्वं पदवाच्येनान्तःकरणविशिष्टेनैक्यायोगादैक्यसिद्ध्यर्थं स्वरूपे लक्षणेति साम्प्रदायिका इत्यवोचत् ।

अर्थात् विद्यारण्यादिपूर्वाचार्यैस्तत्त्वमसीति वाक्ये जहदजहल्लक्षणा स्वीकृता । वयं तु ब्रुमः - सोऽयं देवदत्तः, तत्त्वमसीत्यादौ विशिष्टवाचकपदानामेकदेशपरत्वेऽपि न लक्षणा इत्युक्त्वा स्वकीयसिद्धान्तं प्रतिपादयामास ।

**॥ इति शम् ॥**

**सन्दर्भाः**


1. छान्दोग्योपनिषत् 8.15.1 ।
2. छान्दोग्योपनिषत् 1.1.3 ।
3. मुण्कोपनिषत् 3.2.9 ।
4. वेदान्तपरिभाषा - आ. प्र. (पृ. सं. 200) श्रीगजाननशास्त्रीमुसलगांवकरेण व्याख्यातः ।
5. वेदान्तपरिभाषा - आ. प्र. (पृ. सं. 200) श्रीगजाननशास्त्रीमुसलगांवकरेण व्याख्यातः ।
6. वेदान्तपरिभाषा - आ. प्र. (पृ. सं. 200) श्रीगजाननशास्त्रीमुसलगांवकरेण व्याख्यातः ।
7. वेदान्तपरिभाषा - आ. प्र. (पृ. सं. 201) श्रीगजाननशास्त्रीमुसलगांवकरेण व्याख्यातः ।
8. वेदान्तसारः - पृ. सं. 65, (रामशरणत्रिपाठीशास्त्रीयव्याख्यातः) ।
9. वेदान्तसारः - पृ. सं. 66, (रामशरणत्रिपाठीशास्त्रोयव्याख्यातः) ।
10. वेदान्तसारः - पृ. सं. 72, (रामशरणत्रिपाठीशास्त्रीयव्याख्यातः) ।
11. वेदान्तपरिभाषा - आ. प्र. (पृ. सं. 207) श्रीगजाननशास्त्रीमुसलगांवकरेण व्याख्यातः ।



**सहायकाचार्य्यः, अद्वैतवेदान्तविभागः,**

**केन्द्रीयसंस्कृतविश्वविद्यालयः,**

**एकलव्यपरिसरः,**

**अगरतला ।**




# कविकङ्कणकृतमृगाङ्कशतकस्थालङ्कारसमीक्षणम्

✍डा. नारायणन्. ई. आर.

( वेदोदधिनिःसृतागणितानवद्यविद्यानिकरोपनिषद्भूतसाहित्यविद्याविलासविद्योतितान्तःकरणेन सततसाहित्यसर्जन-कर्मसमाहितमतिना च प्रकृतशोधपत्रे कविकङ्कणकृतमृगाङ्कशतकोदाहृतोपमोत्प्रेक्षारूपकापह्नुतिसमासो-क्त्याक्षेपातिशयोक्त्यादयोऽलङ्काराः खण्डनमण्डनपुरस्सरं तन्निष्ठानुन्मीलिततत्त्वप्रपञ्चप्रतिपादनपुरस्सरञ्च वि-वेचितास्सन्ति । यदनुसन्धानन ज्ञायते यत्पत्रमिदं नूनमेवाध्येतॄणां कृते विवेचनाय साहाय्यमाचरिष्यति ।)

**वाणीं देवीं नत्वा सुभगांश्च निरूपयितुमलङ्कारान् ।**
**नारायणनामाऽहं समवगम्य यते वृत्तं यथातत्त्वम् ॥1॥**
**उपमारूपकपुष्टं युतं समासोक्तिदीपकाक्षेपैः ।**
**कविकङ्कणभणितं तत् काव्यं जयतुतरां मृगाङ्कशतकम् ॥2॥**

**कविकङ्कणस्य मृगाङ्कशतकस्य च सामान्यपरिचयः** – सप्तदशशतकात् प्राचीनः कविरयं कविकङ्कणनामा अलङ्कारप्रियो भगवान् विष्णुरिव सहृदयलोकान् समाकर्षति । कविकङ्कणभणितं मृगाङ्कशतकं आर्यावृत्ते विरचितं प्रसिद्धमेव । तत्रादावार्यात्रयेण गणेशहरिमृत्यु- ञ्जयस्तुतिरूपेण मङ्गलाचरणं सिद्धम् । अलङ्कारकविरिति कङ्कणकवेर्विशेषणं मृगाङ्कशतकात् स्पष्टमेव । कङ्कणकवेर्विरचनानि ग्रन्थसूचिकानां परिष्कृतायां ग्रन्थसूचिकायां सुविशदं दत्तानि । तत्रान्तिमं मृगाङ्कशतकस्य पद्यं यथा –

**इति कविकङ्कणभणितं शतकं तनुतां मृगाङ्कस्य ।**
**विदुषो रुचिमचिरादिव ककुभामुदयो मृगाङ्कस्य ॥** (मृ.श.१०१) इति ।

तत्रापि पुष्पिका तावत् – इति श्रीकविकङ्कणभणितं मृगाङ्कशतकं समाप्तम् इति । अयं वङ्गवास्तव्यः कविरिति श्रुतिः । मृगाङ्कशब्देन चन्द्र एवात्र वर्णनावस्तु भवति । अपह्नुत्यलङ्कारस्य प्राचुर्यमेवात्र शतके दृश्यते। मिषात्, व्याजेन, कैतवात्, कपटेन, छलेन इति निर्देशस्तत्र त्र दृश्यते ।

**अलङ्काराणां कविप्रियत्वं लोकप्रियत्वं च** –

**उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।**
**हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥** (काव्यप्रकाशः–८.६७) इति,

मम्मटाचार्योक्तिप्राबल्येनापि च कविसर्वस्वायमाना उपमादय इति जगद्धरोक्तिबलेन, उपमादीनां कविप्रियता धारेश्वश्रीभोजदेवसम्मतेति सरस्वतीकण्ठाभरणाच्च स्पष्टम् । उक्तं हि भोजदेवेन –

**शब्देभ्यो यः पदार्थेभ्य उपमादिः प्रतीयते ।**
**विशिष्टोऽर्थः कवीनां ता उभयालङ्क्रियाः प्रियाः ॥**

(सरस्वतीकण्ठाभरणम्–४.१) इति ।

पुनश्चालंक्रियतेऽनेनेति व्याकृत्य केवलं चारुत्वहेतुत्वमलङ्कारलक्षणमिति विद्यानाथोक्तिरपूर्णैव, किं चेच्चारुत्वहेतोर्बहुत्रव्याप्तितयाऽनलङ्कारलक्षणस्थलेऽपि चारुत्वहेतुत्वदर्शनादिति वक्तव्यम्, गुणादीनामाश्रयभेदेन चारुत्वविषयतया तस्यैव सम्मतत्वात् । गुणानामपि शोभाहेतोः, काव्यशोभाकरान्धर्मानलङ्कारान् प्रचक्षत इत्यत्रातिव्याप्तिदर्शनाच्च किञ्चिदत्र निष्कृष्टं तावत् समीक्षणीयम् । तत्र स्वतःसिद्धानामेवालङ्काराणामुत्कृष्टत्वं रसादिपरतयेति कवयो जानन्त्येव ।

इत्थं च शब्दार्थाभ्यामेवालङ्करणीयत्वे काव्यस्य रसाद्यनुगुणैकस्वरूपस्य कविसहृदययोरिष्टतया शब्दालङ्कारविचारोपरोधनयेन तावदर्थालङ्कारनिरूपणौचित्यबलेन चोपमादय एव निरूपणीयाः । उपमा तावन्मदीये श्रीदुर्गाप्रशस्तिकागते कस्मिंश्चित्पद्ये यथा –

**अजो व्यलोकीदतुलां भवानिकां यया विनिर्मुक्तमतो जनार्दनम् ।**
**विमुक्तनिद्रो भगवान्महार्णवाद् ददर्श तौ दुष्टतरौ ग्रहाविव ॥** इति॥

अत्रोन्मुक्तनिद्रो भगवान् विष्णुर्मधुकैटभावसुरौ दुष्टतरौ राहुकेतू ग्रहाविव पश्यतीति भीषणत्वनिकृष्टत्वादिसादृश्यबलेन मधुकैटभयोरुपमेयतया राहुकेत्वोरुपमानत्वेन चोपमा सिद्धैव । अत्र दुष्टशब्दग्रहणेन बुधचन्द्रौ परिहृतौ । ग्रहाविति द्विवचननिर्देशेन स्वयं मधुकैटभौ च परिहृतौ, अन्यथाऽनन्वयत्वाद्यापत्तेः। न चानुप्रासयमकचित्राणामपि शब्दाडम्बरबलेन परम्परया रसाद्यनुगुणत्वमिति वाच्यम्, रसादीनां ह्यर्थान्तरप्राधान्यबलेन शब्दप्रासचित्राद्यपेक्षयाऽर्थालङ्कारस्यैव रसादिपोषकत्वात्, तथैव सहृदयहृदयानुभवाच्च । न च काव्यश्रुतौ शब्दार्थयोरलङ्कारयोरेव केषाञ्चिद्रमणभ्रममुग्धतया तत्र च रसादिविघ्नविधाने प्रासचित्रादीनामिवोपमादीनां तुल्ययोग्यतेति वाच्यम्, केवलार्थतदन्तरसम्बन्धस्यैव प्रसक्तौ शब्दाडम्बरमात्रस्य विघ्नविधातृत्वमेवेति सचेतसः । परं यद्यप्यलङ्काराणां बहिः शोभातिशयकारित्वम्, रमणीयताप्रयोजनत्वलक्षणत्वेनालङ्काराणां रसाद्युपकारित्वं स्पष्टमेव । तेन सकलसहृदयप्रयोजनतया कवेरपि रससंपूरितान्तःकरणस्य रसादिष्ववधानता प्रसिद्धैव ।

यच्च सिद्धम् – **रसादिषु कविः स्याच्चेन्नूनमेवावधानवान् ।**
**शोभाप्रयोजनत्वेन स्वतोऽलङ्कारवर्तनम् ॥** इति।

न चानलङ्कृती शब्दार्थावित्यलङ्कारवर्जं काव्यमिति मन्तव्यम्, प्रकाशकृता तथाऽविवक्षितत्वात्, अपि च यः कौमारहर इत्यादिष्वलङ्कारबाहुल्यस्यैव रसाद्यपेक्षया स्फुटं प्रतिपत्तेरपि च रसादिपरचित्तानां काव्यकृतामाडम्बरादिबाह्यवृत्तौ वैमुख्याच्च । रसाद्युपकारित्वे सति शोभातिशायित्वे सति शब्दार्थयोरस्थिरधर्मत्वमलङ्कारत्वमिति प्रतीतिः साहित्यदर्पणात् । तत्रास्थिरधर्मत्वमिति काव्यानुगुणानां स्थिरधर्मत्वज्ञापनार्थमनेन गुणालङ्कारयोर्वैधर्म्यप्राप्तिः। तत्र चोपमायाः प्रथमनिरूपणे समानता सर्वत्र लक्षणग्रन्थेषु । सुन्दरता, वाक्यार्थोपस्कारता सदृशता चेति वैशिष्ट्यमुपमाया इति जगन्नाथः, सा च विपुलालङ्कारवर्तिनीति प्रथममस्या निरूपणेऽप्यौचित्यम् । व्यङ्ग्यस्य काव्यात्मनो रमणीयताप्रयोजनत्वलक्षणेन रसगङ्गाधरेऽलङ्कारा निरूपिताः ।

नाप्यलङ्कारादिविषये विमुखः सन्नपि कवी रसाद्यनुगुणं काव्यं श्रावयतीति शक्यं वक्तुम्, शब्दाडम्बरन्यासविरहेऽप्युपमादेरयत्नोद्भवस्यैव तत्र तत्र स्पष्टत्वात्, कुमारसम्भवमेघदूतादिभ्यस्तथैव श्रवणाच्च । सालङ्कारस्य काव्यतेति वक्रोक्तिकृताऽप्यर्थालङ्कारनयः काव्यानुगुणं दर्शितः ।

**उपमासमीक्षणम्** - तत्रोपमालक्षणं यथा-साधर्म्यमुपमा भेदे (का.प्र.१०.१) इति मम्मटः। तत्रोदाहरणानि तावत् -

**हिमकरकोमलतल्पे शयिताया कामदयितायाः ।**
**श्रवणदलादिव गलिता कुवलयकलिका कलङ्कोऽयम् ॥ 42॥** इति।

अस्मिन् पद्ये, श्रवणदलादिव गलिता कुवलयकलिकेति भेदे साधर्म्यं सिद्धमेव । यथा वा-

**दिवसपतिमनुसरन्त्याः सहसा रागेण सन्ध्यायाः ।**
**हृत इव करेण शशिना नीलनिचोलः कलङ्कोऽयम् ॥38॥** इति।

अस्मिन् पद्ये, नीलनिचोलः कलङ्कोऽयं शशिना करेण हृतः इवेति पूर्णोपमैव । अन्यत्र तु सहृदयैः स्वयं परिशीलनीयम् ।

**उत्प्रेक्षासमीक्षणम्** - उत्प्रेक्षालक्षणं यथा - सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् (का.प्र.१०.५) इति मम्मटः । तत्रोदाहरणानि तावत् -

**अङ्के कलङ्कदम्भाद् गरुडमणिं वहति चन्द्रमाः कमपि ।**
**हरदृष्टिविषविदग्धं जीवयितुं कुसुमधन्वानम् ॥** मृ.श.५ ॥ इति।

अस्मिन् पद्ये, प्रकृतस्य चन्द्रमसः अङ्के कमपि गरुडमणिवहनं समेन कुसुमधन्वाजीवनेन सम्भावनम् । यथा वा -

**जेतुं त्रिभुवनमतनुः स्फटिकगणेशं तुषारकरबिम्बे ।**
**बिल्वदलैरर्चितवांस्तदिह कलङ्कं विशङ्कते लोकः ॥** मृ.श.१ ॥ इति।

अस्मिन् पद्ये, कलङ्कं विशङ्कते लोक इति शङ्कापदेन सम्भावनम् । यथा वा-

**कोपादिव नवशशिना कवलितमखिलं तमःपटलम् ।**

**स्फुरितं तदेव हृदये कलयति शङ्कां कलङ्कस्य ॥** मृ.श.६ ॥ इति।

अस्मिन् पद्ये, कलयति शङ्कां कलङ्कस्येति तथैव । यथा वा –

**इति कविकङ्कणभणितं शतकं तनुतां मृगाङ्कस्य ।**

**विदुषो रुचिमचिरादिव ककुभामुदयो मृगाङ्कस्य ॥** मृ.श.१०१ ॥ इति।

अस्मिन् पद्ये, तनुतां रुचिमचिरादिव ककुभामुदयो मृगाङ्कस्येत्युत्प्रेक्षा। यथा वा–

**मारस्त्रिभुवनवीरस्तदमलफलकं नु मण्डलं शशिनः ।**

**मध्ये विलसति नीलो हस्तावापः कलङ्ककपटेन ॥** मृ.श.५१ ॥ इति।

अस्मिन् पद्ये, कलङ्ककपटेनेत्यपह्नुत्यनुप्रयुक्तोत्प्रेक्षा नु मण्डलं शशिनः मध्ये विलसतीति, न्विति सम्भावनात् ।

यथा वा– **स्मरविरहादिह रत्या मज्जन्त्यास्तुहिनदीधितौ सरसि ।**

**विलुलितचिकुरप्रकरः कलयति शङ्कां कलङ्कस्य ॥** मृ.श.२७ ॥ इति।

अस्मिन् पद्ये, कलयति शङ्कां कलङ्कस्येति तथैव। यथा वा–

**रोषेण राहुणाऽसौ हृदये दशनेन दष्टबिम्बेन्दुः ।**

**तद्व्रणकिणं कलङ्कं शङ्कन्ते साम्प्रतं लोकाः ॥** मृ.श.२६ ॥ इति।

अस्मिन् पद्ये, कलङ्कं शङ्कन्ते साम्प्रतं लोका इति तथैवोत्प्रेक्षा । यथा वा–

**दिनकरकरपरितापाद् वक्षसि निहितं तुषारकिरणेन।**

**नलिनीदलमतिललितं कलयति शङ्कां कलङ्कस्य** ॥ मृ.श.२४ ॥ इति।

अस्मिन् पद्ये, नलिनीदलमतिललितं कलयति शङ्कामित्युत्प्रेक्षितम् । अन्यत्र तु सहृदयैः स्वयं परिशीलनीयम् ।

**रूपकसमीक्षणम्** – रूपकलक्षणं यथा – **तद्रूपकमभेदो य उपमानोपमेययोः** (का.प्र.१०.६) इति मम्मटः । तत्रोदाहरणानि तावत् –**आकृष्य तिमिरचिकुरं रजनीनयनं कलाधिनाथोऽयम् ।**

**यदचुम्बदम्बरान्ते कज्जलकलनां तदङ्कतां वहति ॥** मृ.श.९ ॥ इति।

पद्येऽत्र, तिमिरमेव चिकुरमिति निर्धारणेनोपमानोपमेययोरभेदाद्रूपकम् । रजनीनयनं कलाधिनाथोऽयमिति नायिकानायकयोरप्रस्तुतत्वेन समासोक्तिरपि ध्येया । तल्लक्षणमग्रे । यथा वा–

**उद्वर्त्य वदनमिन्दुं कुङ्कुमपङ्केन यामिनी रुचिरम् ।**

**कलये कलङ्कदम्भान्मृगमदतिलकं निवेशयति ॥** मृ.श.८ ॥ इति।

पद्येऽत्र, कुङ्कुमेनैव पङ्केनेति निर्धारणेनोपमानोपमेययोरभेदाद्रूपकम् । यथा वा–

**हरदग्ध एव मदनः सपदि निमग्नः सुधाकरे सरसि ।**
**मलिना तदङ्गदीधितिरुदयति कपटात् कलङ्कस्य ॥** मृ.श.४ ॥ इति।

यथा वा – **सुन्दरकन्दुकमिन्दुं रजनिरमण्याः करे कलये ।**
**मध्ये तदङ्गुलीयकमरकतरुचिमञ्जरीकलङ्कोऽयम् ॥** मृ.श.८५ ॥ इति।

यथा वा – **अम्बरवराहदंष्ट्राकोटरकोटीनिविष्टमुस्तायाः ।**
**रुचिरमनुहरति सुधांशोरुदरे नीलः कलङ्कोऽयम् ॥** मृ.श.८८ ॥ इति।

यथा वा – **सितकरमेव कलये शशिनं मदनस्य केतनीभूतम् ।**
**दण्डीकृतनववंशच्छायालक्ष्मच्छलात्तत्र ॥** मृ.श.८१ ॥ इति।

यथा वा – **शशिनि सुधामयभूमौ चलति कलङ्कैकनागवल्लीयम् ।**
**रजनीवदनमविरतं रञ्जितमातन्वती रुचिरम् ॥** मृ.श.६२ ॥ इति।

सर्वत्राप्युपमानोपमेययोरभेदाद्रूपकम् । अन्यत्र तु सहृदयैः स्वयं परिशीलनीयम् ।

**अपह्नुतिसमीक्षणम्** – अपह्नुतिलक्षणं यथा – प्रकृतं यन्निष्ध्यान्यत् साध्यते सा त्वपह्नुतिः (का.प्र.१०.७) इति मम्मटः ।

तत्रोदाहरणानि तावत् –

**ओषधिपतिरङ्कमिषात् कलयति शृङ्गारमञ्जरीबीजम् ।**
**दृशि विशदेव यदेतन्मनसि क्षेत्रेऽङ्कुरं वहति ॥** मृ.श.११ ॥ इति।

**शशिनि सुधामयसिन्धौ स्वपिति हरिः किल कलङ्ककपटेन ।**
**अविरतमेव यदेतत्तनयो मदनः पुरः स्फुरति ॥** मृ.श.२॥ इति ।

**शशिमण्डलालवालं काचन शबरी कलङ्ककपटेन ।**
**अविरतमेव कलाभिः कर्पूरैः पूरयन्तीयम् ॥** मृ.श.१२ ॥ इति ।

**रजनीरजतभाजनमरकतमृत्युञ्जयः कलङ्कमिषात् ।**
**भसितभवाम्भसि निहितः किमु जीवयितुं पतिं रत्याः ॥** मृ.श.३ ॥ इति ।

**अमृतमये सरसीन्दावेकं नीलोत्पलं कलङ्कमिषात् ।**
**अहमहमिकया यस्मिन् लोचनमधुपाः प्रधावन्ति ॥** मृ.श.१६ ॥ इति ।

**हरदग्ध एव मदनः सपदि निमग्नः सुधाकरे सरसि ।**

**मलिना तदङ्गदीधितिरुदयति कपटात् कलङ्कस्य ॥** मृ.श.४ ॥ इति ।

**विश्वं विजेतुमचिरादङ्कमिषान्निजपुरस्सरे शशिनि ।**

**कुसुमशरेण करेण स्वयमिह मुद्रामषी निहिता ॥** मृ.श.७ ॥ इति ।

**नभसि सरसि नवताराकुमुदिन्याः कन्दमिन्दुमाकलये ।**

**दिवसद्विपपरिमर्दनपदमिदमङ्के कलङ्कमिषात् ॥** मृ.श.९५ ॥ इति ।

**स्मरशबरनीयमानं जलधेः कमपीन्दुमण्डलं मीनम् ।**

**कलये कलङ्कमन्तर्निगडितबडिशं वहन्तममुम् ॥** मृ.श.८७ ॥ इति ।

**कुसुमशरस्य जिगीषोः शशिनं धवलं वितानमाकलये ।**

**मध्ये स्यूतो विलसति नीलश्चोलः कलङ्कमिषात् ॥** मृ.श.८२ ॥ इति ।

**कलयति कुटिलभ्रूकुटीमोषधिनाथः कलङ्ककपटेन ।**

**मयि जीवति कथमनतुर्मम मित्रं कुसुमधन्वेति ॥** मृ.श.७० ॥ इति ।

एषूदाहरणेषु सर्वत्राङ्कमिषात्, कलङ्ककपटेन, कलङ्कमिषात्, कपटात् कलङ्कस्येत्यदि प्रकृतं यन्निष्ध्यान्यत् सर्वं साधितमित्यपह्नुतिः । अन्यत्र तु सहृदयैः स्वयं परिशीलनीयम् ।

**समासोक्तिसमीक्षणम्** – समासोक्तिलक्षणं हि यथा विद्यानाथकृतौ प्रतापरुद्रीये –

**विशेषणानां तौल्येन यत्र प्रस्तुतवर्तिनाम् ।**

**अप्रस्तुतस्य गम्यत्वं सा समासोक्तिरिष्यते ॥** (प्र.रु. ११७) इति ।

तत्रोदाहरणं तावत् –**कलयामि वदनमण्डलमतरुणहरिणस्य लाञ्छनं शशिनः।**

**कवलिततिमिरतृणस्य श्रमभररोमन्थमन्थरितम् ॥** मृ.श.४० ॥ इति।

अत्र, श्रमभररोमन्थमन्थरितमिति कवलिततिमिरतृणस्य अतरुणहरिणस्य शशिनः वदनमण्डललाञ्छनकलनेन निशाशशिनोरिव नायिकानायकवृत्तान्ताप्रस्तुतरूपस्य गम्यत्वात् समासोक्तिरिष्टैव ।

यथा वा – **आकृष्य तिमिरचिकुरं रजनीनयनं कलाधिनाथोऽयम् ।**

**यदचुम्बदम्बरान्ते कज्जलकलनां तदङ्कतां वहति ॥** मृ.श.९ ॥ इति ।

अत्र, रजनीनयनं कलाधिनाथोऽयमिति नायिकानायकयोरप्रस्तुतत्वेन समासोक्तिः । अन्यत्र तु सहृदयैः स्वयं परिशीलनीयम् ।

**आक्षेपसमीक्षणम्** - आक्षेपलक्षणं यथा-

**विशेषबोधायोक्तस्य वक्ष्यमाणस्य वा भवेत् ।**

**निषेधाभासकथनमाक्षेपः स उदाहृतः ॥** (प्र.रु. १९६) इति ।

तत्रोदाहरणं तावत् -**दिवसपतिमनुसरन्त्याः सहसा रागेण सन्ध्यायाः ।**

**हृत इव करेण शशिना नीलनिचोलः कलङ्कोऽयम् ॥** मृ.श.३८ ॥ इति।

पद्येऽत्र, दिवसपतिमनुसरन्त्याः सन्ध्यायाः नीलनिचोलः शशिना करेण हृत इवेति निषेधाभासकथनादाक्षेपः। अन्यत्र तु सहृदयैः स्वयं परिशीलनीयम् ।

**अतिशयोक्तिसमीक्षणम्** - अतिशयोक्तिलक्षणं यथा-

**विषयस्यानुपादानाद्विषय्युपनिबध्यते ।**

**यत्र साऽतिशयोक्तिः स्यात् कविप्रौढोक्तिजीविता ॥** (प्र.रु.१०५) इति।

तत्रोदाहरणानि तावत् -

**उडुपमण्डलनिभमण्डं रजनिभुजङ्गीयमालिङ्ग्य ।**

**जनयति शशिनि कलङ्कं कालव्यालं समुल्लसति ॥** मृ.श.२२ ॥ इति ।

**पीयूषपूरितममुं हिमकरकलशं निशा नयन्तीयम् ।**

**उच्छलनशङ्कयाऽङ्कं नवकुशनिवहं निवेशयति ॥** मृ.श.२५ ॥ इति ।

**अमृतमये सरसीन्दावेकं नीलोत्पलं कलङ्कमिषात् ।**

**अहमहमिकया यस्मिन् लाचनमधुपाः प्रधावन्ति ॥** मृ.श.१६ ॥ इति ।

**ननु शर्वरीति शबरी शशिकरिदशनैककर्णपूरेऽस्याः ।**

**मलिना कपोलकान्तिर्विलसति कपटात् कलङ्कस्य ॥** मृ.श.१३ ॥ इति ।

**ओषधिपतिरङ्कमिषात् कलयति शृङ्गारमञ्जरीबीजम् ।**

**दृशि विशदेव यदेतन्मनसि क्षेत्रेऽङ्कुरं वहति ॥** मृ.श.११ ॥ इति ।

**शशिसम्पुटे कलङ्कं सिद्धं शृङ्गारकज्जलं रजनी ।**

**दृशि विनिवेश्य जनानां मदनाद्वैतं प्रसाधयति ॥** मृ.श.१० ॥ इति ।

सर्वेषु च पद्येषु कविप्रौढोक्त्या विषयीविषयानुपादानादुपनिबद्धइत्यतिशयोक्तिः स्पष्टैव । अन्यत्र तु सहृदयैः स्वयं परिशीलनीयम् ।

**उपसंहारः**

इत्थं चार्थालङ्काराणां रसादिपरिपोषधर्मतया काव्येषु स्थितानां स्वभावानुसन्धानं सचेतसां काव्यार्थानुशालिनां च प्रमोदाय कल्प्यते । मम्मटरुय्यकविश्वनाथविश्वेश्वरविद्याधरविद्यानाथाप्पय्यजगन्नाथादिकृतलक्षणास्तावदर्थालङ्काराः कुतस्तावत्पुनर्निरूपणीया इति चेत्, गवेषितानां क्वचिदथनवीनतोद्भवे केह सतां हतिर्नाम ।

यच्च सिद्धम् - **पूर्वोक्तानां सदर्थोक्तावर्थालङ्कारसम्पदाम् ।**

**साधिष्ठं साध्यते तत्त्वं गवेषणसमीक्षणैः ॥** इति।

यच्च सिद्धम् - **यद्यलङ्कारतत्त्वार्थः प्रस्थानं नातिगच्छति ।**

**नेदिष्ठाऽपि हि पूर्वोक्तेः सोक्तिस्तत्ता समीक्ष्यते ॥** इति।

किं च तत्रालङ्कारसंस्पर्शः काव्येषु स्वतःसिद्धो वा बलादायोजितो वा ? नाद्यः, यदि स्वतःसिद्धश्चेदेकस्य रसादेः प्रसक्तावलङ्कारप्रविभागानां सर्वेषामपि सिद्धिः स्यात् । नापि द्वितीयः, यदि बलादायोजितश्चेदयत्नसाधनीयत्वे रसादेरपि विघ्नेन रसनाशादलङ्कारस्याप्यङ्गस्याप्रसक्तेः । वस्तुतस्तु कवेः प्रतिभाद्वयविशिष्टवतो भावनानुगुणमयत्नलाभोऽलङ्काराणाम् । अपृथग्यत्ननिर्वर्त्यत्वे रसादीनां न क्वचिद्विप्रतिषेधः ।

यच्च सिद्धम् - **भावयित्री स्वतः शक्ती रसाद्यनुगुणा स्मृता ।**

**प्रवृत्तौ कारयित्रीति प्रतिभा कविचेतसः ॥** इति।

**प्रतिभा भावयित्र्याख्या सचेतस्सु प्रभाविता ।**

**नैव सृष्टिपरा चेत्सा कवित्वं न सचेतसाम् ॥** इति च ।

भावनाविलासितचेतसां किं तु काव्यं कर्तुमशक्नुवतां कविसमानहृदयता सिद्धास्तेषां च भावयित्रीप्रतिभाविलासेन सहृदयत्वमव्याहतम् । रसाङ्गतया सिद्धेष्वप्यलङ्कारेषु कविप्रियता लोकप्रियता च वरीवर्ति ।

**सन्दर्भग्रन्थसूची**

1. A Short History of Sanskrit Literature by T. K. Ramachandra Aiyar, Pub: R.S. Vadhyar & Sons. Palghat. Reprint Edition-2006.
2. The History of Sanskrit Literature by K. Kunjunni Raja & M. S. Menon, Kerala Sahitya Academi, Thrissur, Reprint Edition (in single volume)] December – 2002.
3. The Kavyaprakasha by Mammata, Edited by V.S. Abhyankar, Vidyabhavan Indological Series, No-59. Chowkhambha Vidyabhavan, Varanasi, Second Edition-1994.
4. The Kavyalankarasangraha by Bhamaha, Tukaram Javaji, Mumbai-1915.

5. The Malayamaruta, Part Four, Edited by Dr. V. Raghavan, Rashtriya Samskrita Samsthan, New Delhi-1978.
6. The Natyashastra by Bharatamuni, Rashtriya Sanskrit Sansthan, New Delhi-2002.
7. The Prataprudriya of Vidyanatha with the Ratnapana of Kumarasvamin, The Samskrit Educational Society, Chennai-1999.
8. The Rasagnagadhara of Jagannath Pandit, Motilal Banarsidass, Delhi-7, Reprint Edition - 1988
9. The Sarasvatikanthabharana of Bhojadeva, Nirnaya Sagar Reproduction, Chowkhambha Orientalia, Varanasi, Reprint Edition – 1987.
10. The Sahityadarpana by Vishvanatha, Motilal Banarsidass, Delhi – 7, Reprint Edition – 2000.

सहायकाचार्यः, साहित्यविभागः,
केन्द्रीयसंस्कृतविश्वविद्यालयः,
गुरूवायूरपरिसरः, केरलम् ।



# ज्योतिषशास्त्रे दार्शनिकतत्त्वानां विमर्शः

✍डॉ.प्रसादगोखले

**(निबन्धेऽत्र ज्यौतिषशास्त्रस्य यज्ञानुष्ठानकर्म्मणे कालबोधायोपयोगित्वम्, तस्य तस्य यज्ञस्य कालविशेषे विधानादिति विज्ञाप्य परम्परया प्रवृत्तिनिवृत्तिसम्पादकत्वेन शास्त्रत्वमथ च परम्परयैव दर्शनसम्बन्धवत्तया दर्शनत्वं साधयितुमीहन्ते लेखकाः । तत्र तथ्यरूपेण भास्कराचार्य्यस्य, सूर्य्यसिद्धान्तस्य, लघुपाराशर्य्याश्च वचनं व्याख्यातम् । वस्तुता ज्योतिषस्य वेदाङ्गत्वाद् वेदाऽभेदेन शास्त्रत्वं निरपवादम्, किन्तु मङ्गलाचरणे क्वचिद् ब्रह्मणश्चर्चितत्वमात्रेण परम्परया दर्शनत्वसाधनं न मनोरमम् । यदि सिसाधयिषा प्रबला तदा 'कालो ब्रह्म' इति सिद्धान्तं पुरस्कृत्य तदनुरोधेन दर्शनत्वसाधनं कदाचिद् वरमिति प्रतीमः।)**

**सारांशः** - अस्मिन् शोधपत्रे मया ज्यौतिषशास्त्रे दार्शनिकतत्त्वानां प्रभावः कथमस्ति इति प्रदर्शनपूर्वकं विमर्शात्मकं चिन्तनं प्रस्तूयते । ज्यौतिषं दर्शनं भवति नवा इत्यत्र एव संदिह्यमानाः वयं अस्मिन् विषये चिन्तनमत्रविधाय तत्र दार्शनिकता कथमुपपद्यते इति विषये आलोचयामः ।

**ज्यौतिषशास्त्रम्** – ज्योतिषशास्त्रं वैदिककर्मानुष्ठानस्य सत्फलप्रदायकस्य समयनिर्धारणाय आबहोः कालात् भारतीयपारम्परिकशास्त्रपारावारधुरोणैः व्यवह्रियमानं वर्तते । भारतीयसंस्कृतसाहित्यस्य तु आत्मैव भवतीदमिति न तत्रास्माकमाश्लेषविच्छेदः स्यात् । अतः चक्षुः स्थानीयमिदं वेदाङ्गं सर्वस्यापि वेदोक्तस्य कर्मणः मूलाधारभूतमिति नागोचरं विपश्चिदपश्चिमानाम् । मुण्डके श्रूयते च 'द्वे विद्ये वेदितव्ये परा चैवापरा च । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति' । वदाङ्गमिदं वैदिकानामग्निहोत्रादि-कर्मणामनुष्ठानसमयनिर्धारणाय प्रवृत्तमिति जानीमः । अतः अस्य वेदाङ्गस्य यज्ञादिनिवर्तने महान् उपयोगः आसीदिति स्पष्टं गम्यते । यज्ञानां बाहुल्यं वर्तते । केचन यज्ञाः वत्सरपर्यन्ताः, केचित् मासपक्षतिथिविशिष्टाः च आसन्, अतः तेषां यज्ञानां विधानं कालनिर्णयश्च पृथगेव भवतिस्म । उल्लिखितञ्च तैत्तिरीयब्राह्मणे 'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्य आदधीत । शरदि वैश्य आदधीत 'यज्ञविधानाय ज्योतिषशास्त्रस्य आवश्यकता भास्कराचार्येणापि आदृता । उक्तञ्च –

**वेदास्तावद् यज्ञकर्मप्रवृत्ता यज्ञाः प्रोक्तास्ते तु कालाश्रयेण ।**
**शास्त्रादस्मात्कालबोधो यतः स्याद् वेदाङ्गत्वं ज्यौतिषस्योक्तमस्मात् ॥**

तस्मात् ज्यौतिषं वेदाङ्गशास्त्राणां मूर्ध्नि वर्तते । श्रूयते च –

**यथा शिखामयूराणां नागानां मणयो यथा ।**
**तथा वेदाङ्गशास्त्राणां ज्यौतिषं मूर्धनिस्थितम् ॥**

तस्माज्ज्यौतिषस्य शास्त्रत्वमव्याहतं वेदाङ्गत्वञ्च । ननु शास्त्रं नाम प्रवृत्तिं निवृत्तिं वा बोधयति । प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते । इति । तर्हि अप्रवर्तकत्वात् अनि-वर्तकत्वाच्च सिद्धसमयमात्रबोधकस्य ज्यौतिषस्य न शास्त्रत्वमितिचेत्सत्यं, प्रवृत्त्यादेः साक्षाद्बोधकं नेदं शास्त्र-मथापि कर्मणित्प्रवृत्तस्य 'कालोऽयं तव कृते यक्तः अथवाऽयुक्तः' इत्यादि बोधयत् प्रवृत्तस्य स्वप्रवृत्तौ निवृत्तौ वा निश्चयं जनयत् 'शास्त्रत्वं हितशासनात्' इत्याद्युक्तिबलाद्धितशासनात् अपि शास्त्रत्वं भवत्येव ज्यौतिषादेरिति युक्तः ज्यौतिषस्य वेदाङ्गस्य शास्त्रत्वनिर्णयः । अन्यथा पातञ्जलस्यापि निष्कारणः षडङ्गो वेदः अध्येयः ज्ञेयश्च इत्या-द्युक्तेः वैय्यर्थ्यं स्यात् । अतः वेदाङ्गमिदमध्येयं सर्वैरिति निश्चितं भवति ।

**दर्शनम्** - दर्शनम् इति शब्दश्रवणमात्रेण सर्वेषां विदुषां मनसि प्रथममेव उपनिषदः बुद्धिमधिरोहन्ति । तासु उपनिषत्सु प्रतिपादितस्यैव तत्त्वस्य साक्षात्कारेण दर्शनेन मुक्तः भवितुमर्हति जीवः दुःखसंसारसागरात् इति वैदिकाः मन्यन्ते । वस्तुतः दर्शनस्य उद्भवः दुःखत्रितयतापविमोचनाय अभवत्, अतः दुःखसागरात् मोक्षः, मोक्षमार्गः वा येषु ग्रन्थेषु प्रतिपादितः भवति ते ग्रन्थाः दर्शनग्रन्थाः इति उच्यन्ते । तत्र प्रमाणं प्रमेयं च इति भागद्वयमाश्रित्य अपि भेदः वर्तते । केचन प्रमेयप्रधानाः दर्शनविषयाः केचित् प्रमाणप्रधानाः च सन्ति । अतः मोक्षस्य नित्यत्वं सर्वसम्मतं चेदपि तस्य स्वरूपं प्राप्तिमार्गः सर्वेषामपि मते भिन्नभिन्नः दृश्यते । यद्वा स्याद् वासनाक्षयः मोक्षः इति तु सिद्धान्तः न क्वचित् अतिक्रान्तो भवति । अतः सगुणनिर्गुणादिभेदेन तत्त्वं द्विधा भिद्यते इति वा स्यात्, तत्वानि पञ्चविंशतिर्वा स्युः, षड्विंशतिर्वा स्युः., प्रमाणानि त्रीणि वा स्युः पञ्च वा, दश वा नास्माकं कापि क्षतिः । सर्वथापि तु मोक्ष एव दर्शनस्य लक्ष्यत्वेन गृहीतः, तत्प्रतिपादनपरो भागः दर्शनमिति कथयितुं युक्तः । सामान्यतः दर्शनं नाम ज्ञानमिति अर्थः । तच्च श्रवणमनननिदिध्यासनात्मकमितिविशेषः ।

**ज्यौतिषे दार्शनिकतत्त्वानि** - ज्यौतिषे दार्शनिकतत्त्वानि इति विषये स्वीकृते साक्षात् ज्यौतिषस्य दर्शनेन संबन्धः नास्ति, अथापि परम्परया अस्ति इति ज्ञातं भवति । वस्तुतः यद्यत्र न विद्यते तत्तत्र दर्शयितुं न शक्यते । यदि दर्शनसंस्पर्शलेशोऽपि ज्यौतिषस्य न स्यात्तर्हि तत्र दर्शनप्रभावः दर्शयितुं न शक्यते स्म, किन्तु एकं दृष्टान्तं पश्यामः चेत्स्पष्टं भवेत् यदस्माकं दर्शनसंबन्धः परम्परया अस्ति एव इति । यथा सूर्यसिद्धान्तमंगलश्लोके पश्यामः -

**अचिन्त्याव्यक्तरूपाय निर्गुणाय गुणात्मने ।**
**समस्तजगदाधारमूर्तये ब्रह्मणे नमः ॥**

**अन्वयः** - अचिन्त्याव्यक्तरूपाय, निर्गुणाय, गुणात्मने, समस्तजगदाधारमूर्तये, तस्मै ब्रह्मणे नमः । इति । अस्मिन् श्लोके ब्रह्मणः नमस्कारः विहितः वर्तते । एकैकस्यापि पदस्य अर्थं चिन्तयामः । वस्तुतस्तु ब्रह्म इति शब्दे बृंह वृद्धौ इति धातोः निरतिशयव्यापकार्थः निष्पन्नः । अस्य जातिक्रियानामरूपेष्वनन्तर्भावात् ब्रह्मणः अपि

अपरि- च्छिन्नता अस्ति इति गम्यते । तस्मै ब्रह्मणे नमः इति ब्रह्मणः नमस्कारः विहितः । ब्रह्मणे नमः इत्यत्र चतुर्थी नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च' इति सूत्रेण विहिता । यस्य नमस्कारः विधीयते तस्य मूर्तिः का, स्वरूपं किमिति जिज्ञासायां जगदाधारत्वमुक्तम् । तच्च ब्रह्मणः वेदान्तशास्त्रप्रसिद्धजगत्कारणत्वं तृतीयपादेन प्रदर्शितम्, समस्तजगदाधारमूर्तये इति मुखेन । सर्वस्यापि जगतः उत्पत्तिस्थितिलयकारणब्रह्मेति वेदान्तनयः । 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुत्या जगज्जन्मस्थितिलयकारणत्वं ब्रह्मणः अस्ति इति सर्वदार्शनिकसम्मतम् । अतः तटस्थलक्षणमिदं सूपपादितम् । अथापि जगदाधारत्वं कस्य गुणवतो वा निर्गुणस्येति शङ्कानिवारणाय गुणात्मने इति उक्तम् । अनन्तकल्याणगुणस्य ब्रह्मणः एव जगदुत्पत्यादिहेतुत्वं सम्भवति न निरूपाधिकस्य इति गुणात्मने इति युज्यते । तद् ब्रह्म किं गुणयुक्तमेव वा इति आशङ्का, ब्रह्मणः गुणयुक्तत्वे परिच्छिन्नत्वं स्याद्, परिच्छिन्नत्वे च अनित्यत्वमिति तां वारयति निर्गुणाय इति विशेषणेन । निर्गुणं रूपमपि व्यक्तमुताव्यक्तमिति शङ्का, तत्राह अव्यक्ताय इति । निर्गुणमव्यक्तं चेत्साक्षात्कर्तुं कथं तच्चिन्तनीयं स्यात्तत्रोक्तमचिन्त्यमिति । नैषा तर्केण मतिरपनेया इति ब्रह्मणः चिन्तनं कुर्युः, किन्तु तद् ब्रह्मसंबद्धमेव चिन्तनं भवति न तु ब्रह्मणः अतः ब्रह्मणः चिन्तनापेक्षया तदचिन्त्यमिति विज्ञाय 'अवचनेनैव प्रोवाच' इत्यादि श्रुतिसिद्धं वाचामगोचरं ब्रह्म अस्ति । तस्मै ब्रह्मणे नम इति । अस्मिन् मन्त्रे दर्शनप्रतिपादितमेव तत्त्वं मङ्गलाचरणमुखेन प्रतिपादितं वर्तते । अतः स्पष्टमिदं यत्कालशास्त्रमपि ज्ञानात्मकं दर्शनसापेक्षमेव प्रवर्तते इति । दर्शनञ्च कालशास्त्रसापेक्षं प्रवर्तते इति । अतः न अन्योन्याश्रयः अपितु ज्यौतिषेपि दार्शनिकतत्त्वानि सन्ति इति एतावन्मानं सिद्ध्यति । इतोऽपि दृष्टान्तान्तरेण इदं स्पष्टीकुर्मश्चेत् उडुदायप्रदीपाख्यायां लघुपाराशर्यामपि मंगलश्लोके स्पष्टमेवाह पराशराचार्यः यत् -

**सिद्धान्तमौपनिषदं शुद्धान्तं परमेष्ठिनः ।**

**शोणाधरं महः किञ्चिद् वीणाधरमुपास्महे ॥** इति ।

**अन्वयः** - औपनिषदं सिद्धान्तं, परमेष्ठिनः शुद्धान्तं, शोणाधरं वीणाधरं किञ्चित् महः उपास्महे इति । अत्र वयमिति पदाध्याहारः ।

**भावः** - अस्मिन् मंगलश्लोके भगवत्याः सरस्वत्याः वन्दनं ग्रन्थकारेण व्यधायि । औप-निषदसिद्धान्तस्वरूपं यन्महः, तेजः प्रजापतेः परब्रह्मस्वरूपस्य परमेष्ठिनः अन्तःकरणे विद्यमानं रक्तफलमिव रक्ता-धरं, वीणाधरं च यत्तद्द्वयमुपास्महे इति । इतः अग्रे उडुदायप्रदीपस्य निर्माणविषयिणीं प्रतिज्ञां करोति ग्रन्थकारः । स्वयं परब्रह्मणः शारदास्वरूपस्योपासनायां लग्नः सन्नपि दैवविदां मुदे पाराशरीं करोमि इति दृश्यते । अतः वेदान्तदर्शनस्वरूपा सरस्वती सर्वत्र अनुस्यूततया ज्यौतिषादिशास्त्रे अपि अनुगता एव इति भावः ।

**समीक्षा** – ननु साक्षात् दर्शनप्रतिपादिततत्त्वानां विचारः न कृतः इति विषयस्तु चिन्तनीय एव भवति । सत्यं, साक्षात् यद्यपि दर्शनप्रतिपादिततत्त्वानां विचारः न ज्यौतिषे तथापि दार्शनिकतत्त्वानि अपि विवेचितानि सन्ति इति अनेन विषयालोचनेन सिद्धं भवति । अतः परम्परया ज्यौतिषमपि दर्शनमेव इति सिद्ध्यति । दर्शने कर्मानुष्ठानं मोक्षसाधनं परम्परया भवति इति प्रतिपादितं दृश्यते । धर्मजिज्ञासां कृत्वा ब्रह्मजिज्ञासा कर्तव्या इति हेतोः चित्तशुद्धये कर्माणि प्रतिपादितानि दृश्यन्ते । तत्र **'ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा अनाशकेन'** इत्याद्या श्रुतिः प्रमाणभूता । अतः कर्मानुष्ठानं सुतरां कर्तव्यमिति तदर्थम् अवश्यं वेदोक्तकालनिर्धारणप्रक्रिया अनुसर्तव्या । तच्च अनुसरणं ज्यौतिषबोधपुरःसरमेव संभवति । अतः अवश्यमेव ज्यौतिषस्य दर्शनाङ्गत्वं सिद्ध्यति इति विमर्शः ।

**उपसंहारः** – ज्यौतिषशास्त्रे अपि दार्शनिकतत्वानां विशेषविचारः कृतः दृश्यते इति समालोचनेनानेन अवगम्यते इति उपसंहरामः ।

**सहायकप्राध्यापकः,**
**कविकुलगुरुकालिदाससंस्कृतविद्यापीठम्,**
**रामटेकम्, नागपुरम् । महाराष्ट्रम् ।**



# श्रौतयज्ञेषु विष्णुस्वरूपविमर्शः

डॉ. दे. दयानाथः

**( यज्ञो वै देवानामात्मा । कुत इत्युक्ते यज्ञस्य सर्वभोगसाधनत्वात् । स च यज्ञो विष्ण्वात्मकः, यज्ञो वै विष्णुरिति श्रुतेः । विष्णुक्रमैर्वै प्रजापतिरिमं लोकम्, अन्तरिक्षं, दिवं, दिशो, भूतं, वित्तम्, अहः, पक्षं, मासमृतूनादिकमसृजतति ब्राह्मणे निरूपितम् । श्रौतयागानां प्रसङ्गे तैत्तिरीयशाखागतमन्त्रानाश्रित्यात्र निबन्धे विष्णोः श्रेष्ठत्वं, हविःसंरक्षकत्वं, यज्ञात्मकत्वं, सर्व-देवस्वरूपत्वं, त्रिविक्रमावतारित्वम्, आहवनीयाग्निस्वरूपत्वं, परमपदत्वमन्तर्यामित्वञ्च सप्रमाणं सव्याख्यानं विवेचितम् ।)**

**सर्गस्थितिविनाशानां जगतो ये जगन्मयः । मूलभ्तो नमस्तस्मै विष्णावे परमात्मने** ।।[1] इति विष्णु-पुराणश्लोकेन विष्णोः जगदुत्पत्तिस्थितिलयादिकारकत्वं परमात्मस्वरूपत्वञ्च ज्ञायते । विष्णुशब्दनिर्वचनं विष्णुपुराणे यथा - **यस्माद्विष्टमिदं विश्वं यस्य शक्त्या महात्मनः । तस्मात् स प्रोच्यते विष्णुर्विशेर्धातोः प्रवेशनात् ।।**[2] इति । वैष्णवमन्त्राः वेदे यद्यपि बहु नोपलभ्यन्ते । तथापि यत्र विष्णुमन्त्राः निगदिताः तत्र तस्य श्रेष्ठत्वं साधु प्रतिपादितम् । आदौ तैत्तिरीयसंहितायां विष्णोर्वर्णनं दर्शपूर्णमासयागप्रकरणे दर्शयागार्थं सम्पादितस्य क्षीरस्य दध्नाऽऽ-तञ्चनसमनन्तरं तस्य रक्षणार्थं पठ्यमाने मन्त्रे दृश्यते । यद्यपि दधिद्रव्यमिन्द्राय हूयते तथापि तद्द्रव्यरक्षार्थं यजमानः विष्णुं प्रार्थयति । संहितायां मन्त्रः यथा - **विष्णो हव्यं रक्षस्व ।।**[3] इति । अत्र रक्षाणार्थमेव विष्णुस्मरणमिति ब्राह्मणवाक्यम् । तद्यथा - **विष्णो हव्यं रक्षस्वेत्याह गुप्त्यै ।।**[4] इति । अत्र विष्णोः स्वरूपं हविस्संरक्षकत्वेन दृश्यते ।

दर्शपूर्णमासप्रकरणे प्रस्तरोपादानमन्त्रे विष्णुः स्मृतः । अस्मिन्नेव प्रकरणे विष्णोर्यज्ञस्वरूपत्वं प्रपञ्चितं ब्राह्मणे । तैत्तिरीयसंहितायां मन्त्रः यथा - **विष्णोः स्तूपोऽसि ।।**[5] इति । प्रस्तरविशेषस्य यज्ञधारकत्वेन स्तुतिः । प्रसङ्गेऽस्मिन् विष्णोः यज्ञस्वरूपत्वं ब्राह्मणं वक्ति । तद्यथा - **विष्णोः स्तूपोऽसीत्याह । यज्ञो वै विष्णुः ।**[6] इति। प्रकरणेऽस्मिन् स्रुचः अभिमर्शने विनियुक्तमन्त्रेण यज्ञस्य पोषणार्थमपि विष्णुं प्रार्थयति । मन्त्रः यथा - **एता असदन्त्सुकृतस्य लोके ता विष्णो पाहि, पाहि यज्ञं, पाहि यज्ञपतिं, पाहि मां यज्ञनियम् ।।**[7] इति । ब्राह्मणं विशदयति यत् - **ता विष्णो पाहीत्याह । यज्ञो वै विष्णुः । यज्ञस्य धृत्यै ।**[8] इति । अध्वर्युः प्रार्थनया आत्मनेऽपि आशिषः प्रार्थयति । ब्राह्मणं यथा - **पाहि यज्ञं, पाहि यज्ञपतिं, पाहि मां यज्ञनियमित्याह । यज्ञाय**

**यजमानायाऽऽत्मने । तेभ्य एवाशिषमाशास्तेऽनार्त्यै ॥**[9] इति । विष्णुर्यज्ञात्मकः इति या लोकप्रसिद्धिस्तदस्मिन् दर्शपूर्णमासयागप्रसङ्गे एव प्रतिपादिता ।

दर्शपूर्णमासप्रकरणे यजमानकर्तृकं विष्णुक्रमाख्यं कर्म विधत्ते ब्राह्मणम् । यथा – **विष्णुमुखा वै देवा-श्चच्छन्दोभिरिमाँल्लोकाननपजय्यमभ्यजयन् यद्विष्णुक्रमान् क्रमते विष्णुरेव भूत्वा यजमानश्छन्दोभिरिमाँल्लो-काननपजय्यमभिजयति ।**[10]इति । पुरा कदाचिद्देवाः छन्दोभिमानिदेवैः सह विष्णुमेव अग्रे कृत्वा इमान् लोका-नजयन् । अतः यजमानोऽपि विष्णुक्रमरूपं कर्म अनुष्ठाय विष्णुरेव भूत्वा अजेयः भवति लोके इति प्रसङ्गः । अत्र देवानां मध्ये विष्णुः मुख्यः इति प्रदर्शितः ।

अग्निष्टोमयागे आतिथ्येष्टिरनुष्ठेया । सा चेष्टिः अतिथिरूपेण समागतस्य सोमस्य सत्कारायानुष्ठीयते । इष्टौ हविर्निर्वापमन्त्रः यथा – **अग्नेरातिथ्यमसि विष्णवे त्वा सोमस्याऽऽतिथ्यमसि विष्णवे त्वाऽतिथे-रातिथ्यमसि विष्णवे त्वाऽग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वा श्येनाय त्वा सोमभृते विष्णवे त्वा ॥**[11]इति । सर्वदेवात्मनः विष्णोरंशभूता इमे अग्न्यादयः यागशालायां राज्ञि समागते अभ्यागताः सन्ति । अत्र अग्यादीनां न हविःप्रदानं, हविषा सह सम्बन्धः केवलस्य सर्वदेवतासमष्टिरूपस्य विष्णोरेव इति निर्णयः । अग्न्यादिरूपाय विष्णवे हविर्निर्वपामीति फलितार्थः । मन्त्रेणानेन ज्ञायते विष्णुस्सर्वदेवस्वरूप इति ।

अग्निष्टोमयागे हविर्धानशकटस्य दक्षिणचक्रमार्गे हिरण्यं निधाय होमः कर्तव्यः । विधिर्यथा – **वैष्णवीभ्यामृग्भ्यां वर्त्मनोर्जुहोति ॥**[12] इति । मन्त्रः यथा – **इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे ॥**[13]इति । मन्त्रेऽस्मिन् विष्णोः त्रिविक्रमावतारो वर्णितः । अयं विष्णुस्त्रेधा भूम्यन्तरिक्षद्युलोकेषु स्वपदं स्थापितवान् । भूम्यादिलोकाः तस्य पादस्य पांसवः एव । पृथिव्यादिलोकाः विष्णोः पादयोरन्तर्भूत इत्यर्थः । अस्य मन्त्रस्य माध्यन्दिनसंहितायाः भाष्यकृत् श्रीमहीधराचार्यः अद्वैतप्रतिपादकं विशिष्टं किमप्यर्थं वक्ति । यथा – **'अस्य विष्णोः पदं पद्यते ज्ञायते इति पदम् अद्वैताख्यं स्वरूपं समूढमन्तर्निहितमज्ञातमकृतात्मभिः'।**[14] इति । तत्र दृष्टान्तः पांसुरे रजस्वले स्थाने निहितं यथा न ज्ञायते तद्वदिति । तत्पदं ज्ञातव्यमिति शेषः । तादृशाय विष्णवे इदं हविर्दीयते । मन्त्रे विष्णोः त्रिविक्रमावतारवर्णनपुरःसरं तस्य लोकत्रयात्मकः अग्निवायुसूर्यरूपेण त्रेधा पदं निहितमि-त्यतः तदात्मकः इति च तत्स्वरूपमवगम्यते । अस्मिन्नेव प्रकरणे वैजसर्जनीयहोमः विहितः । तन्मन्त्रे इदमाम्नायते – **उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि ॥**[15]इति । प्रकरणानुसारमत्र विष्णुः आहवनीयाग्निरूपः । विष्णुशब्देन आहवनीयाग्निः सम्बोध्यते । अस्मद्वैरिषु विक्रमस्व पराक्रमं प्रसारय । पुनरस्माकं निवासाय प्रजा-पोषणाय गृहधानादिकं सम्पादय इति प्रार्थ्यते । मन्त्रेऽस्मिन् विष्णोराहवनीयाग्निस्वरूपः प्रदर्शितः ।

सोमयागे यूपसंस्कारप्रकरणे मन्त्रद्वयं समाम्नातम् । तद्यथा – **विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥ तद्विष्णोः परमं पदं सदा पश्यति सूरयः । दिवीव चक्षुराततम् ॥**[16]इति । हे जनाः, विष्णोः सृष्टिस्थितिसंहाररूपाणि कर्माणि पश्यत । यश्च विष्णुरिन्द्रस्य योग्यः अनुकूलः सखा वर्तते । अनुकूलत्वञ्चेन्द्रकृतवृत्रवधे विष्णुकृतसहायमेव । यश्च विष्णुः स्वकर्मभिः लौकिकवैदिककर्माणि निर्ममे । विष्णोः तत् परमं पदं सदा वेदान्तविद्यापारङ्गताः पश्यन्ति । तत्र दृष्टान्तः दिवि विस्तारितं आदित्यमण्डलं यथा तद्वदित्यर्थः । अत्र विष्णोः स्थानं परमपदमिति प्रपञ्चितम् ।

तैत्तिरीयसंहितायां विहिता काचिदिष्टिरभ्युदनामिका । तद्यथा – **विष्णवे शिपिविष्टाय शृते चरुम् ॥**[17] इति । अत्र पुरोनुवाक्या इत्थं वर्तते – **वषट् ते विष्णवास आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥**[18]इति । शिपिषु पशुषु विष्टः इति विष्णुः शिपिविष्टः । हे शिपिविष्ट, मया हूयमानं हविः सेवस्व । वर्धन्त्विति बहुवचनं पूजार्थम् । त्वं श्रेयोभिस्सदाऽस्मान् रक्षत । अत्र विष्णुः प्राणिनामन्तः प्रविश्य तिष्ठतीति ज्ञायते । तृतीयकाण्डे अभ्यातानमन्त्राः समाम्नाताः । तत्र विष्णुरेव पर्वतानामधिपतिरित्युक्तम् । तद्यथा – **अग्निर्भूतानामधिपति....विष्णुः पर्वतानाम् ॥**[19]इति । विष्णुः गोवर्धनादिपर्वतानामधिपतिः । स विष्णुर्मामवत्विति यजमानः प्रार्थयति ।

**वैष्णवं वामनमालभेत**[20] इति विहिते यागे विनियुक्तः कश्चन मन्त्रः । तद्यथा – **प्र तद्विष्णुस्तवते वीर्याय । मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेषु । अधिक्षियन्ति भुवनानि विश्वा ॥**[21] इति । यजमानः स्ववीर्यप्राप्तये विष्णुं स्तौति । विष्णुः सिंह इव भयङ्करः अपि च सः पर्वतोपरि सिंह इव उत्प्लुत्य तिष्ठति । यस्मिन् त्रिषु विक्रमणेषु त्रिषु त्रिविक्रमावताररूपेण कृतपादविक्षेपे सर्वे लोका निवसन्ति । अत्र विष्णोः सिंहसदृशं गाम्भीर्यं त्रिविक्रमावतारश्च वर्णितः । सोऽयं मन्त्रः 'वीर्येण' इति[22] पदव्यत्ययेन माध्यन्दिनसंहितायामपि समाम्नातः । अयं विष्णुरनितरसाधारणकर्मणा स्तुतिं लभते । स च विष्णुः मार्ष्टि शोधयतीति मृगः । कौ पृथिव्यां मत्स्यादिरूपेण चरतीति कुचरः । गिरौ वाण्यां देहे वाऽन्तर्यामिरूपेण तिष्ठतीति गिरिष्ठः । मन्त्रेऽस्मिन् विष्णाः अनितरसाधारणत्वं, वाचः पालकत्वम्, अन्तर्यामित्वेन देहे स्थितत्वात् परमात्मरूपत्वञ्च वर्णितम् ।

तैत्तिरीयब्राह्मणे उपहोमार्थं विनियुक्ताः कतिपयमन्त्राः । तदुक्तं सायणाचार्येण –

**होतृब्राह्मणशेषो यः स तृतीये समापितः ।**

**चतुर्थ उपहोमानां पूर्वभागोऽभिधीयते ॥ इति ।**[23]

उपक्रमेऽस्मिन् समाम्नाताः वैष्णवमन्त्राः यथा – **भवा मित्रो न शेव्यो घृतासुतिः । विभूत द्युम्न एवया उ सप्रथाः ॥ अधा ते विष्णो विधृताचिदृध्यः । स्तोमो यज्ञस्य राज्ञो हविष्मतः ॥**[24]इति । अत्र घृताहुतिं

सेव्यमान प्रभूतधनयुक्त हे विष्णो मित्रमिव यजमानस्य सुखहेतुर्भव इति प्रार्थना । अपिच विष्णुः यज्ञेनाराधनीयः । यज्ञाय द्रव्याभावादनुष्ठानाशक्तत्वेऽपि जपादिना तत्सम्पूर्तिर्भवति । तदुक्तं स्मृतौ -

**जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः ।**
**कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ इति ।**[25]

अग्रे आम्नातः मन्त्रः यथा - **यः पूर्व्याय वेधसे नवीयसे । सुमज्जानये विष्णवे ददाशति । यो जात-मस्य महतो महि ब्रवात् । सेदुः श्रेवोभिर्युज्यं चिदभ्यसद् ॥**[26] इति । पूर्व्याय जगतः पूर्वमेव भवाय पुराणाय, वधसे जगन्निर्मात्रे, नवीयसे रामकृष्णाद्यवतारैः नित्यनवीनाय सुमज्जानये लक्ष्मीपतये विष्णवे हविर्ददाति यजमानः । मन्त्रेऽस्मिन् विष्णोः जगत्स्रष्टत्वं नित्यनवीत्वञ्चेत्यादिकं स्वरूपं वर्णितम् । अग्रे मन्त्रः - **तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य । गर्भं हविषा पिपर्तन । आऽस्य जानन्तो नाम चिद्विवक्तन । बृहत्ते विष्णो सुमतिं भजामहे ॥**[27]इति । तं पूर्व्यम् अनादिसिद्धं पुरुषं, यज्ञस्य गर्भं यज्ञात्मानं, विष्णोर्यज्ञात्मकत्वं श्रूयते ब्राह्मणे - **यज्ञो वै विष्णुः**[28] इति । अथवा सृष्ट्यादौ ऋतस्य जलस्य उत्पादयितारं, तदुक्तं स्मृतौ - **अप एव ससर्जादौ**[29] इति । हे मनुष्याः तादृशं विष्णुं हविषा पूजयत । अशक्तौ नाम चिद्विवक्तन विष्णोः केशवनारायणेत्यादिनामसङ्कीर्तनं वा कुरुत । हे विष्णो तव सुमतिमनुग्रहबुद्धिं वयं निरन्तरं भजामहे सेवामहे । विष्णुरेव जगत्स्रष्टा, यज्ञस्वरूपः, वेद-प्रतिपाद्यः परमपुरुष इति तत्वरूपं मन्त्रे स्पष्टमुदीरितम् ।

अस्ति ह्यारुणकतुकचयनाख्यं श्रौतं कर्म । नात्र इष्टका मृदादिना निष्पादनीयाः । अत्र आप एव इष्ट-कारूपेण उपधातव्याः । तत्र इष्टकोपधाने आम्नाताः पञ्च वैष्णवमन्त्राः । आद्यः मन्त्रः यथा - **किंस्विदत्रान्तरा भूतम् । येनेमे विधृते उभे । विष्णुना विधृते भूमी । इति वत्सस्य वेदना ॥**[30]इति । प्रश्नोत्तरमाध्यमेन विष्णुस्वरूपं वर्णितमत्र । येन वस्तुना इमे द्यावापृथिव्यौ आधारत्वेन विधृते वर्तेते, किं वस्तु द्यावापृथिव्योर्मध्ये विधारकौ स्तः इति प्रश्नः । तस्तोत्तरं ऋचः द्वितीयार्धेनोच्यते परमात्मना विष्णुना भूमी द्यावापृथिव्यौ विधृते वर्तेते इत्येवं वत्समहर्षेः तत्त्वविज्ञानम् । तदेव प्रोक्तं भगवताऽपि -

**गामाविश्य च भूतानि धारयाम्यहमोजसा ।**
**पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ इति ।**[31]

अग्रे चाम्नायते - **किं तद्विष्णोर्बलमाहुः । का दीप्तिः किं परायणम् । एको यद्धारयद्देवः । रेजती रोदसी उभे ॥**[32]इति । अयं विष्णुः राजमाने उभे द्यावापृथिव्यौ धरति । एतादृशी शक्तिः विष्णोः कुत आगता सा दीप्तिः कुत्रत्या, किं च तस्य विष्णोः परायणं सहायकभूतं वस्तु इति विचारः । उत्तरस्यामृचि अस्योत्तरं विद्यते । तद्यथा - **वाताद्विष्णोर्बलमाहुः । अक्षराद्दीप्तिरुच्यते । त्रिपदाद्धारद्देवः । यद्विष्णोरेकमुत्तमम् । अग्नयो**

**वायवश्चौव । एतदस्य परायणम् ॥**[33]इति । विष्णोर्बलं वातादागतमित्याहुः । तत्तु श्रुत्यन्तरे प्रतिपादितम् । यथा बृहदारण्यकोपनिषदि – **वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्ति ।**[34] इति तस्य विष्णोर्जगदवभासकं यत्तेजः तच्च अक्षराद्विनाशरहितात्स्वकीयपरम-पदासमुद्भवतीत्यभिज्ञाः प्रवदन्ति । तच्च उपास्यैरुपास्यं परमं पदं ज्ञानिभिर्वेद्यम् । अत एवोक्तं – **तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ॥**[35]इति । तच्च परमं पदं ज्ञानिभिः परविद्यया गम्यत्वाद्विनाशरहितमित्युक्तम् । तदेव मुण्डकोपनिषद्याम्नायते – **'अथ परा यया तदक्षरमधिगम्यते'**[36]इति । अपि च कठोपनिषद्यपि – **'तमेव भान्त-मनुभाति सर्वं तस्य भासा सर्वमिदं विभाति'**[37] इति । त्रिपात्स्वरूपाद्ब्रह्मणः सामर्थ्यात् विष्णुस्सर्वं जगद्धारयति । उक्तं त्रिपात्स्वरूपं पुरुषसूक्ते – **'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि'**[38]इति । अग्नयः वायवः आदित्याश्चेति सर्वं देवजातमस्य विष्णोः सहकारिभूतमिति । इत्थमारुणकेतुकप्रकरणे विष्णोस्स्वरूपं वर्णितम् ।

विष्णुर्यज्ञाधिष्ठातेति वैदिकी प्रसिद्धिः । भगवतः विष्णोः स्वरूपं वेदपुराणादिषु बहु विस्तरेण प्रतिपादितम् । श्रौतयागानां प्रसङ्गे विशेषतः तैत्तिरीयशाखागतमन्त्रेषु प्रकरणानुसारं यत्स्वरूपं वर्णितं तदेवात्र नूनं प्रपञ्चितम् ।

**सन्दर्भाः**

1. वि. पु. 1.2.4 ।
2. वि. पु. 3.1.45 ।
3. तै. सं. 1.1.3 ।
4. तै. ब्रा. 3.2.3 ।
5. तै. सं. 1.1.11 ।
6. तै. ब्रा. 3.3.6 ।
7. तै. सं. 1.1.11 ।
8. तै. ब्रा. 3.3.6 ।
9. तत्रैव ।
10. तै. सं. 1.7.5 ।
11. तै. सं. 1.2.10 ।
12. तै. ब्रा. 6.2.9 ।
13. तै. सं. 1.2.13 ।
14. वा. सं. 5.15 महीधरभाष्यम् ।

15. तै. सं. 1.3.4 ।
16. तै. सं. 1.3.6 ।
17. तै. सं. 2.5.5 ।
18. तै. सं. 2.2.12 ।
19. तै. सं. 3.4.5 ।
20. तै. सं. 2.1.3 ।
21. तै. ब्रा. 2.4.3 ।
22. मा. सं. 5.20 ।
23. तै. ब्रा. 2.4 भाष्योपक्रमे सायणाचार्यः ।
24. तै. ब्रा. 2.4.3 ।
25. मनु. 2.87 ।
26. तै. ब्रा. 2.4.3 ।
27. तत्रैव ।
28. तै. ब्रा. 1.3.8 ।
29. मनु. 1.8 ।
30. तै. आ. 1.8 ।
31. भ. गी. 15.13 ।
32. तै. आ. 1.8 ।
33. तै. आ. 1.8 ।
34. बृ. उप. 3.7.2 ।
35. तै. सं. 1.3.6 ।
36. मु. उप. 1.1.5 ।
37. कठ. उप. 2.2.15 ।
38. ऋ. सं. 10.90.3 ।

**परिशीलितग्रन्थसूची -**


1. तैत्तिरीयसंहिता सायणभाष्ययुता, आनन्दाश्रमग्रन्थालय, 1981 ।
2. तैत्तिरीयब्राह्मणम् सायणभाष्ययुतम् , आनन्दाश्रमग्रन्थालय, 1981 ।
3. तैत्तिरीयारण्यकम् सायणभाष्ययुतम्, आनन्दाश्रमग्रन्थालय, 1987 ।
4. शुक्लयजुर्वेदसंहिता उव्वट-महीधरभाष्यसहिता, संपादकः पं. रामकृष्णशास्त्री, चौखम्बा विद्याभवन, वाराणसी, 2013 ।
5. श्रौतयज्ञप्रक्रियापदार्थानुक्रमकोषः, पं. पीताम्बरदत्त शास्त्री, राष्ट्रिय संस्कृत संस्थान, नवदेहली, 2005 ।
6. यज्ञतत्त्वप्रकाशः, डॉ. चिन्नस्वामी शास्त्री, मद्रास् ला जर्नल प्रेस, 1953 ।
7. विष्णुमहापुराणम्, श्री थानेशचन्द्र उप्रैति, परिमल पब्लिकेशनस, 2011 ।
8. मनुस्मृतिः, पं. हरगोविन्दशास्त्री, चौखम्बा संस्कृत सीरिज, वाराणसी 2019 ।
9. Manu-Smriti, Ganganath Jha, University of Calcutta 1924.



**सहायकाचार्यः, वेदविभागः**

**राष्ट्रियसंस्कृतसंस्थानम्**

**( मानितविश्वविद्यालयः )**

**विशालखण्डः - ४, गोमतीनगरम्**

**लखनऊ - २२६०१० ( उ. प्र. )**




# भारतस्य वर्त्तमानपरिस्थितिविमर्शः

✍डॉ. एस्. कृष्णा

**( वैयक्तिक-पारिवारिक-सामाजिक-राष्ट्रिय-सांस्कृतिकस्वरूपं भारतस्य प्राचीनमर्वाचीनञ्च कीदृशमिति विवरणप्रधानेऽस्मिँल्लेखे यत्रैकत्र गौरवकरं वृत्तमुट्टङ्कितन्तत्रैवापरत्र चिन्ताव्याकुलताकरं तत्त्वं सम-क्षमानीतम् । एतस्य समाधानं संस्कृतस्य गर्भाद् विज्ञानस्य च विवेकपूर्णविकासात् सम्भवेदित्यप्यत्र साधु सम्भावितम् । वैद्यकशास्त्रे यथा निदानान्वेषणानन्तरं रोगनाशनं सुकरम्, तथैव समस्याबीजं समुद्घाट्य तन्निवारणं सुगममिति धिया प्रवृत्तोऽयं लेखः समसामयिकः, प्रासङ्गिकश्चेति विद्मः।)**

**शोधप्रस्तावः** – भारतस्य गौरवमयी कीर्तिः देवैरपि जेगीयते । अत्रत्यं वैशाल्यं गौरवमयीं ख्यातिञ्च श्रुत्वा देवाऽपि विचिकित्सन्ते स्म । सर्वविधसौकर्ययुतं ज्ञानविज्ञानं, वेदस्य ज्ञानराशेः अनुनित्यं समुच्चारणम् ऋषिमुनीनां सांगत्यं, यज्ञादिकर्मकाण्डद्वारा गुञ्जायमानमाकाशं, सुरम्यं वातावरणं, प्राकृतिकसौन्दर्यम्, निरामयं वातावरणं, सर्वदा प्राणवायोः संचारः, मानवेषु ऐक्यभावना, सुखशान्तिपूर्णं जीवनं, विद्वेषभावरहितः समाजः सुव्यवस्थितकार्यप्रणाली, दीर्घायुष्यम् एवम् विचिन्त्यते चेत् जीवनमर्याप्तं भवति । एकेन वाक्येन उच्यते – 'स्वर्गादपि गरोयसी' अस्य चरितम्। अपि च विष्णुपुराणे भारतभुवो गौरवं प्रोच्यते । गायन्ति देवाः किल गोतकानि, धन्यास्तु ते भारतभूमिभागे । स्वर्गापवर्गास्पदमार्गभूते भवन्ति भूयःपुरुषाः सुरत्वात् । एतादृशी भूः इदानीम् अनेकविधैः क्लेशैः समस्याभिः संग्रस्ता वर्तते । सर्वत्रापि भयावहा स्थितिः संलक्ष्यते । अत्र ताः समस्याः विभज्य तासां समस्यानां परिचर्चा कृता वर्तते

विशालमस्माकं भारतभूमिः भारतम् । अस्यां नानाविधाः जनसमाजाः निवसन्ति । एतेषां वर्णः भिन्नः, भाषाः विभिन्नाः, साहित्यमनेकं, पूजापद्धतिरनेका, व्रतानुष्ठानञ्च विभिन्नम् । अत एव जनेषु प्रान्तीयतावादः, क्षेत्रीयतावादः, भाषाविवादः, जातिभेदः, धर्मभेदश्च सर्वत्रैव दरीदृश्यन्ते । जनानां मानसिकं पर्यावरणं सम्पतिपूर्णरूपेण प्रदूषितं जातम्। सर्वत्रैव नरसंहारः स्त्रीव्यभिचारः लुण्ठनं वञ्चनमातङ्कवादश्च विराजन्ते । इदानीं स्वर्गादपि गरीयसी मातृभूमिः कलुषिता जाता । पृथिव्यां विद्यमानाः नद्यः प्रदूषिताः सन्ति । सर्वेषां पवित्रकर्त्री गङ्गापि प्रदूषणेन युक्ताऽस्ति । इतस्ततः पृथिव्यां नद्याञ्च कर्दमराशिः प्राचुर्येण प्रक्षिप्यन्ते । पर्यावरणसंशोधनसमर्थानि वनानि नष्टान्यभवन् । वन्यपशूनां गवाञ्च हिंसनं प्रायेण श्रूयते । शब्दगुणकमाकाशमपि ध्वनिना विस्फोटकादिशब्दैश्च प्रदूषितं विद्यते । यज्ञादिमाध्यमेन पर्यावरणसंरक्षणं प्रदूषितञ्च पर्यावरणं परिशुद्धं पूर्वं भवति स्म । इदानीं यज्ञादिकमाडम्बरं मन्यते । प्राचीनकाले यज्ञोऽयं भुवनस्य नाभिः कथ्यते स्म । प्रायेण यज्ञः ऋतूनां सन्धिकालेऽनुष्ठीयते स्म । ऋतुपरिवर्तनकालेऽनेकेषां रोगकृमीणां विनाशं कृत्वा अयं यज्ञः आरोग्यं बलं दीर्घायुष्यञ्च प्रददाति । भैषज्यरूपः,

याज्ञिकोऽग्नि: सर्वदा पर्यावरणस्य परिशोधनं करोति । अर्थात् यज्ञेन पृथिव्या: संस्कारो भवति । अत एव पूर्वं मानवा: प्रकृतिप्रदत्तवस्तूनामुपयोगितामवलोक्य तेषु देवत्वस्य स्थापनां कृतवन्त: । प्राकृतिकवस्तूनां पूजनपरम्पराऽपि त त: एव प्रारब्धा । प्राय: सर्वेषु प्राचीनग्रन्थेषु पर्यावरणसमस्यानिवारिणी वृक्षाणां पर्वतानां नदीनां वायूनां प्राणिनां पृथिवीनां चर्चा आवश्यकरूपेण दृश्यते । प्रकृतिरेव मानवानां सर्वश्रेष्ठा शिक्षिकाऽसीत् । प्रकृतीनां क्रियाभिरेव मानवानां हृदयेषु भयविस्मयप्रेमादिभावानामुद्भवो जायते प्रकृतेरेव क्रियामवलोक्य मानवेषु ज्ञानविज्ञानयो: विकासोऽभवत् । सम्प्रति मानवानां मानसिकं पर्यावरणं प्रकृतिं प्रति प्रदूषितं जातम् । अत एव नानाविधा: समस्या: शोश्रूयन्तेऽद्य । पुनश्च विद्यमाना: ताश्च समस्या: पञ्चधा विभक्तुं शक्यते । (क) वैयक्तिकसमस्या:, (ख) पारिवारिकसमस्या:, (ग) सामाजिकसमस्या:, (घ) राष्ट्रियसमस्या:, (ङ) सांस्कृतिकसमस्याश्च ।

**(क) वैयक्तिकसमस्या:** - इदानीं मनुष्या: अधिकाधिकमुपभोगं कर्तुमिच्छन्ति एतस्मात् कारणात् उपभोक्तृवादसंस्कृति: वर्धमाना दृश्यते । वस्तुत: उपभोक्तुमतिशयकामनया अर्थसम्पादने अधिकासक्ति: भवति । कथञ्चिदपि बाधितेऽर्थोपार्जने मनसि खिन्नता समुत्पद्यते ।

अपरञ्च भ्रष्टाचारविषयिकी समस्या । पर्यावरणप्रदूषणसमस्या यथा मनुष्यैरेवोत्पादिता परिपोषिता च, तथैव भ्रष्टाचारस्य समस्याऽपि मानवैरेवोत्पाद्यते, वृद्धिञ्च नीयते । भ्रष्टाचारस्य तात्पर्यं भवति भ्रष्ट: आचार: इत्येव । आचारस्य सदाचारस्य वा ये मानदण्डा: स्वीकृता: वर्तन्ते, ते यदा मनुष्येण दूषिता: भवन्ति, तदा स आचारो भ्रष्टाचार: इति कथ्यते । इत्थम् आचाराद् भ्रंशनमेव भ्रष्टाचार: उच्यते । भ्रष्टाचारस्य बहूनि रूपाणि विद्यन्ते । यथा - उत्कोच:, अपमिश्रणम्, तस्करता, वित्तकोशेषु छदमादानप्रदाने, करापवञ्चनम् स्त्रीपुरुषाणामनैतिका: सम्बन्धा:, देशद्रोह:, परेषां शोषणं, राजनीतिकनियमानामुल्लंघनमित्यादय: । कदाचिदयमार्थिको भ्रष्टाचारो भवति कदाचित् राजनैतिको, कदाचित् समाजिको कदाचिच्च चारित्रिको भ्रष्टाचार: । इत्थं भ्रष्टाचारस्य नैकानि रूपाणि भवितुमर्हन्ति । भ्रष्टाचारस्य मूले नैकानि कारणानि विद्यन्ते, यथा - श्रमं विनैव फलप्राप्तौ रुचि:, लोभग्रस्ता चित्तवृत्ति: महत्त्वाकांक्षाया: तीव्रता, अभावग्रस्तता, सद्गुणानामप्रोत्साहनम्, राजकीयनियमानामव्यावहारिकत्वं, विकासस्य मिथ्यावधारणा, आत्मवद्भावस्याभावश्च हितोपदेशे भ्रष्टाचारस्य चत्वारि निमित्तानि प्रतिपादितानि, यथा -

**यौवनं धनसम्पत्ति:, प्रभुत्वमविवेकता । एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥**

इत्यादिरूपेण । तथा च चारित्र्यदोष: अपि मानवमध: पातयति । इदानीं समाजजीवनस्य भिन्नभिन्नक्षेत्रे उन्नतस्थाने विद्यमानानामपि केषाञ्च चारित्र्यं निदष्टं नावलोकितम् । चरित्रं तु जीवनस्य सर्वस्वम् । अत: चारित्र्यशुद्धिनिमित्तं महाभारतं निर्दिशति -

**वृत्तं यत्नेन संरक्षेत् वित्तमेति च याति च । अक्षीणो वित्तत: क्षीणो वृत्ततस्तु हतो हत: ॥**

अपि च व्यवहारविषये विष्णुस्मृतौ निर्दिष्टमस्ति - **नाश्लीलं कीर्त्तयेत् । नानृतम् । नाप्रियम् । धर्मविरुद्धौ चार्थकामौ । लोकविद्विष्टं च धर्ममपि ॥**

**( ख ) पारिवारिकसमस्याः** - प्राचीनकाले संयुक्तपरिवारचिन्तनमासीत् । इदानीं चिन्तनं तत् प्रायः काल्पनिकतां प्राप्नोति । वर्तमानपरिवारचिन्तने परस्परं स्नेहाभावः दृश्यते । स्नेहाभावः द्विधा - क्वचित् सन्ततिवचनम् अभिभावकः उपेक्षते । क्वचिच्च सन्ततिः अभिभावकवचनं नावगच्छति । एतस्यां स्थितौ परिवारः विघटितः इव तिष्ठति । अपि च पुरा मातृपितृपितामहादीनां शुश्रूषयाऽशीर्वादावाप्तिः परमश्रेयसे मन्यते स्म । परमद्य तु अनेकेषां समृद्धानां सुसज्जितगृहेषु तेषां कृते स्थानाभावः जायते । त वृद्धगृहेषु प्रेष्यन्ते अथवा कुत्रचित् गृहस्योपेक्षिते कोणे जीवननिःश्वासान् गणयन्ति । अद्यत्वे मातृपितृभगिनीभ्रातृन् पृथक्कृत्य पतिपत्नीपुत्रपुत्रीणामेव परिवार इति कल्पितः । अद्यत्वे स्वार्थपरता संवर्धते । व्यक्तिनिष्ठता विवर्धते । भौतिकमहत्त्वाकाङ्क्षाः पूरयितुं मृगतृष्णा तरुणायते । परन्तु परिवारे व्याप्तं पावनं स्नेहबन्धनं शैथिल्यं भजते । सुखदुःखयोरद्वैते दाम्पत्येऽपि द्वैतमायातम् तत्राऽपि द्वन्द्वः प्रवर्तते । दिनानुदिनं समाचारपत्रेषु आत्महत्यासमाचारान् पाठं पाठं कस्य मनो न दूयते । परिवारे परिव्याप्ताः सुरक्षासंवेदनासहानुभूतिसहिष्णुतासेवापरायणतादयः लुप्तप्रायाः । कलहायमानम् अहमहमिकाप्रधानं पारिवारिकपर्यावरणम् असुरक्षाघृणाकटुतादिभिः प्रदूषितम् । वैभवविभुत्वातिरेकेण मधुरा मानवीयसम्बन्धा ध्वस्ताः । पतीनां पत्नीनाञ्च वासांसीव परिवर्तनेन जीवने अस्थिरता असुरक्षा च व्याप्नुतः । विद्यालयेषु मादकद्रव्यसेवनम्, अविचिन्त्य सहपाठिषु गोलिकाचालनम्, अल्पे वयसि विवाहं विनैव गर्भधारणं सामान्यं जातम् ।

**( ग ) सामाजिकसमस्याः** - सामाजिकसमस्यासु नानाविधाः समस्याः संघर्षाश्च गणयितुं शक्यन्ते । यथा - जातिसंघर्षः, धार्मिकसंघर्षः, राजनैतिकसंघर्षः चेति । एतासां समस्यानां कारणतः देशः उद्विग्नः सन् समाधातुं यत्नशीलः दृश्यते । नरसंहारः, धर्मान्तरणं सर्वकारस्यास्थायित्वं साहित्यं चेति परिणामाः प्रत्यक्षीभूताः सन्ति । सार्वजनिकहिताय सहयोगस्य अभावः प्रवृत्तिरूपेण वर्धते । स्वार्थभावना अधिका परहितचिन्तनं च न्यूनम् । अथ च प्राचीनभारते नार्यः पूज्याः आसन् । 'यत्र नार्यस्तु पूज्यन्ते, रमन्ते तत्र देवताः ।' इति मनुना उक्तम् । नारीं विना संसारस्य यात्रा निष्फला भवति, किमपि धार्मिकं कृत्यं न सम्पादितं भवति । न केवलमेतावदेव अपितु 'मातृवत् पारदारेषु परद्रव्येषु लोष्ठवत्' इति यदा भावना न समुदेति, तर्हि स्त्री व्यभिचारस्य कथा श्रवणपथमागमिष्यति । जगति कुपुत्रस्य दर्शनं भवति, कुत्रापि कुमाता न दृश्यते - 'कुपुत्रो जायते क्वचिदपि कुमाता न भवति' इत्थं मातरं प्रति श्रद्धा भावना स्पष्टमेव दृश्यते । परन्तु इदानीन्तनकाले स्त्रीधनादिकारणैः स्त्रीणां हननादिकं पीडनादिकं च प्रवर्तते । महिलानामुपरि अत्याचारबलात्कारविषये समाचारः प्रकाश्यतेऽनुदिनम् । महिला दाह्यते मानसिकरूपेण शारीरिकरूपेण भृशं पीडयते ।

**(घ) राष्ट्रियसमस्याः** – या अधिकमिदानीं पीडयति सा समस्या अस्ति निरुद्योगित्वम् । निरुद्योगित्व-समस्याया मूले जनसंख्याविस्फोटः एव । राष्ट्रे प्रान्तभेदः, भाषाभेदः चापि दृश्यते । राष्ट्रियैक्यस्य अखण्डतायाश्च समस्या परिलक्ष्यते । राष्ट्रभावं द्रढीकर्तुं नानाविधवचनानि सन्ति संस्कृतवाङ्मये यथा – 'प्रादुर्भूते सुराष्टेऽस्मिन् कीर्तिं वृद्धिं ददातु मे (श्रीसूक्ते)। अस्मिन् उत्तमे राष्ट्रेऽयं जातः । अतः मह्यं कीर्तिं समृद्धिं च देहि इति ।'

अद्यत्वे विभिन्नप्रान्तेषु उग्रवादसमस्याऽपि उद्भूताऽस्ति । अतः अस्माकं युवकाः संरचनात्मककार्यं त्यक्त्वा विध्वंसात्मककर्मणि प्रवृत्ताः जाताः सन्ति ।

**(ङ) सांस्कृतिकसमस्याः** – वस्तुतः कस्यापि राष्ट्रस्य संस्कृतिः तस्य राष्ट्रस्य प्राणस्वरूपा भवति । भारतीयसंस्कृतिः श्रेष्ठतमा । अधुना भारतीयसंस्कृतेः उपरि कुठारघातः क्रियते । दूरदर्शने अश्लीलतायाः परिवेषणं क्रियते, येन भारतीया संस्कृतिः अपि अप्रभाविता नास्ति । चलच्चित्रेषु अपि अश्लीलता नोपेक्ष्यते । चलच्चित्रनायकाः नायिकाः वा युवकानां युवतीनां च आदर्शाः भवन्ति । अतः युवकाः युवत्यः तान् ताः वा अनुकुर्वन्ति एतादृशदुःस्थितेः निवारणाय उच्यते –

**संस्कृतं संस्कृतिश्चत्येतद्द्वयमभिन्नम् । भारतस्य प्रतिष्ठे द्वे संस्कृतं चैव संस्कृतिः ॥**

भारतीयसंस्कृतेः संवाहिका भाषा संस्कृतम् । अतः संस्कृतं नाम भारतस्य सांस्कृतिकभाषा । संस्कृतद्वारा संस्कृतिः ज्ञातुं शक्यते । परमद्यत्वे संस्कृतमुपेक्षते, भारतीयानां संरक्षणार्थं संस्कृतस्य प्रतिष्ठार्थं प्रतिष्ठा आवश्यकी । एवं विभिन्नाः समस्याः वर्तमाने काले परिलक्ष्यन्ते । तथापि अद्यतनयुगस्य विशेषताः अपि भृशं वर्तन्ते । ताः उपेक्षितुं न हि शक्यते । तासामपि परिगणनं क्रियते । तद्यथा – कृषिविषयिणी वृदधिः – कृषिप्रधानोऽस्माकं भारतदेशः । अत्रत्यः प्रजाजनः प्राधान्येन कृषिमाध्यमेन स्वजीविकां सम्पादयति । पुरा तु कृषिफलं मेघवृष्ट्यायत्तमिति हेतोः प्रतिवत्सरं वर्षर्तुकाले जनपदनिवासिनः कृषीवलाः निर्निमेषलोचनैः मेघागमनं प्रतीक्षन्ते स्म। मेघेर्वर्षिते सति भूमिः भूयसीं सस्यसम्पदं प्रसूते । परन्तु यदा दैवकोपात् अनावृष्टौ सत्यां सैव क्षेत्रभूमिः असञ्जातप्रसवा वन्ध्येव निष्फला संजायते, तदानीं न केवलं प्रजाजनाः खाद्यान्नानुत्पादेन विपन्नतां गच्छन्ति, अपितु देशस्य गोबलीवर्दादिकं पशुधनमपि क्षुत्तृड्भ्यां व्याकुलं भवत् मृत्युमुखं प्रविशति । एतेनैव कारणेन अनेकप्रदेशा देवमातृकाः इत्युच्यन्ते । यतस्तु वृष्टिकारको देवः एव प्राणधारणसामर्थ्यजनिका माता भवति । इदानीं तेषु स्थलेषु नदी प्रणालिकाः जलाशयाः पातालभेदिनो नलकूपाश्च सस्याभिवृद्ध्यै जीवनदायकं जलं सुलभं कुर्वन्ति । अधिकसस्यसम्पदा नवीनपरिशोधनानि प्रचलन्ति । तेनैव कारणेन कर्षणयन्त्राणि भूमिहृदं विदार्य बीजाङ्कुरणशक्तिं प्रवर्धयन्ति । वपनीयानां बीजानां सवीर्यत्वसम्पादनाय खादस्रूपेण ऊर्वकचूर्णप्रयोगः सस्योत्पादनपरिमाणे आश्चर्यावहां वृद्धिं जनयति । एवं प्रकारेण कृषिविषयेऽद्यभारतमग्रगणदेशेष्वन्यतमं वर्तते ।

वैज्ञानिकविस्फोटनेनाऽद्य जलविद्युतो वाष्पविद्युतो वा उत्पादनाय विद्युतसंयंत्राणां व्यवस्था विद्युतस्तम्भानां ग्रामीणक्षेत्रस्य दूरस्थलेन प्रापणेन ग्रामा अरण्यानि च विद्युतप्रकाशप्रकाशिताः कृताः सन्ति । येन न केवलं तिमिराच्छन्नानि कृषकगेहानि प्रकाशवन्ति जातानि । अपितु कृषकमनांस्यपि हर्षोत्फल्लानि परिलक्ष्यन्ते । यतो विद्युद्विस्तारेण लघुकुटीरोद्योगस्य संवर्धने सुकरे जाते जोवनसुखोपयोगीनि अनेकानेकव्यवहारप्रयुक्तानि वस्तूनि सूपलब्धानि सञ्जातानि । इदानीं रेल-मार्गेण कष्टकर्यो दीर्घयात्राः सौविध्यपूर्णाः सञ्जाताः सन्ति । एकरात्रावेव दिल्लीतः कलिकाताप्राप्तिः आकाशयात्रायां कतिपयहोराभिः एक-सुदूरस्थलयात्रा-समाप्तिः इत्यादयोऽनेके नवीनोपक्रमाः जनजीवने जीवनसौकर्यमानीय जीवनं जीवनीयं कुर्वन्ति।

आयुर्वेदक्षत्रे विज्ञानशास्त्रप्रगतिः अनेकदृष्टिभिः कौतुकावहत्वं भजते । भयंकररोगोपशमोपायाः सङ्क्रामकव्याधीनां नियमनं, चिकित्सापद्धतिसुधा इत्यादीनि जनस्वास्थ्यसंवर्धनसाधनानि उपलब्धानि सन्ति, येन जनानां दीर्घायुष्ट्वं स्वस्थजीवनं च सुलभं सञ्जातमस्ति । 'स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेमहि देवहितं यदायुः' इति वैदिकप्रार्थनायाः फलमिदानीं हस्तगतं मन्यामहे । देशस्य सर्वेषां निवासिनां समकालमेव समुन्नतिः अभीष्टा इति हेतोः तत्र भेदव्यवहारः अनर्थकरो मन्यते ।

विद्याक्षेत्रेऽपि अभूतपूर्वमिदं प्रमोदं जनयति । साक्षरताप्रसारः विभिन्नशास्त्राणामुच्चतमस्तरावधिः, पाठनव्यवस्था, नवीनविद्यापीठसंस्थापनं छात्रवृत्त्यादिविविधसौकर्यप्रदानं, ज्ञानप्रसारे ज्ञानवर्धने च वाञ्छनीयं समुत्कर्षं सूचयन्ति । महिलाशिक्षाविषये इव संस्कृतशिक्षाविषयेऽपि इदानीमनन्यसामान्योऽभिनिवेशः प्रदर्श्यते । विद्यालयोयसर्वस्तरेषु संस्कृताध्ययनोत्साहप्रवर्धनं आकाशवाणीमाध्यमेन संस्कृतशिक्षणमनोरञ्जककार्यक्रमयोजनादिविविधकार्यजातैः जनतायां संस्कृतविषयिणी रुचिः संवर्ध्यते । किं बहुना सर्वविधक्षेत्रेषु इदानीं कल्याणकारियोजनाः देशस्य शुभोदयपथ कार्यं कुर्वन्ति । अपि च अन्ताराष्ट्रियसम्बन्धेषु भारतवर्षस्यापूर्वं योगदानं सर्वैः स्वीक्रियते । पञ्चशीलस्य अवतारणा भारतवर्षेणैव प्रारब्धा । परमतासहिष्णुत्वं परित्यज्य विश्वबन्धुत्वं प्रोत्साहनीयम्, विवादविषयाः परस्परपरामर्शनसमाधेयाः । तत्र हिंसावादः सर्वथा त्याज्यः इत्यादीन् आदर्शसिद्धान्तान् विश्वराष्ट्रसमाजे भारतवर्षं गौरवपूर्णस्थाने स्थापयन्ति । अत एव प्राचीनकाले इव अद्यापि एतद्देशप्रसूतस्य सिद्धान्तस्यानुपालनात् स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः इत्युपदेशः सार्वकालिक शाश्वतादर्शो भवितुमर्हति । एवंरीत्या वर्तमानभारतस्य स्वरूपं विम्रष्टुं प्रयत्नः कृतः ।

**सहायकाचार्या, शिक्षाशास्त्रविभागः**

**कन्द्रीयसंस्कृतविश्वविद्यालयः**

**क. जे. सोमैयापरिसरः, मुम्बई ।**

# व्यक्तित्वविकासे शिक्षायाः भूमिका

✍डा.दशरथ भरासागर

**(व्यक्तित्वं नाम व्यक्तिनिष्ठो भावः । स च व्यापकः, सततं निर्मीयमाणो ह्रासयुतश्च । तत्र शिक्षापि द्विविधा, सच्छिक्षा असच्छिक्षा च । तयोः सच्छिक्षया व्यक्तित्वं विकसति, असच्छिक्षया च ह्रसति । तस्माद् व्यक्तित्व-विकासाय सच्छिक्षाया माहात्म्यमवश्यमङ्गीकरणीयम् । प्रकृतनिबन्धे राधाकृष्णन्महोदयानां कलाममहोदयाना-ञ्चोपदेशम्, अथ च श्रीमद्भगवद्गीतोद्धरणञ्च प्रदाय व्यक्तित्वविकासाय शिक्षाया भूमिकेति निरूपितम् ।)**

भारतदेशः प्राचीनकालात् आरभ्य विश्वगुरुः आसीत् । देशेऽस्मिन् विविधजातिवर्णधर्मावलम्बिनः जनाः निवसन्ति । भारतदेशः ऋषीणां देशः आसीत् । वशिष्ठ-विश्वामित्र-गौतम-कपिल-भृगु-अगस्ति-दुर्वासादोनाम् । अस्माभिः ज्ञातुं शक्यते यत् अयं भारतदेशः सुवर्णदेशः इति सर्वे जनाः कथयन्ति । महाभारतयुद्धसमय भगवतः श्रीकृष्णस्य अष्टादश दिवसान् यावत् गीतायाः उपरि अर्जुनं प्रति उपदेशः आसीत् । श्रीमद्भगवद्गीतायां द्वितीयाऽ-ध्याये स्थितप्रज्ञविषये भगवन्तः श्रीकृष्णाः ऊचूः ।

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।**
**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥**

श्लोकेऽस्मिन् अस्मान् बोधयति यत् क्रियामाध्यमेनैव अस्माकं भावः प्रकटितो भवति । दुःखेष्वनुद्विग्न-मनाः कश्चन जनः किमपि कार्यं करोति, तर्हि तस्मिन् कार्ये सः दक्षः न भवति । तस्मिन् कार्ये ये दक्षाः जनाः भवन्ति अवश्यं तं जनं तर्जयन्ति । तदानीं तस्य जनस्य मनसि दुःखं भवति । अतः सः जनः तूष्णीं भूत्वा तत् कार्यं पुनः कथं सुचारुरुपे संपादयामि इति विचिन्त्य धर्येण तिष्ठति ।

**सुखेषु विगतस्पृहः** - कार्यं सम्यक् भवति तर्हि सर्वे जनाः प्रशंसन्ति । तदानीं मनसि आनन्दः तु जायते परन्तु बहिः प्रकटनं न स्यात् ।

**वीतरागभयक्रोधः** - संसारस्य वस्तुनः उपरि अस्माकं अभिलाषा जायत । तदेव रागः इति उच्यते । बलवती व्यक्ति बलरहितजनस्य उपरि अत्याचारं करोति, तर्हि अवश्यं भयं भवति । यः यं प्रति अधिकं स्नेहं करोति । स एव क्रोधं करोति । अनेन अस्माभिः स्पष्टं ज्ञातुं शक्यते यत् व्यक्तित्वविकासाय ज्ञानम् अवश्यं भवेत् ।

**काङ्क्षन्तः कर्मणा सिद्धिं यजन्त इह देवताः ।**
**क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥**

संसारे मानवाः उदरपूर्त्यर्थम् अनेकानि कार्याणि कुर्वन्तः भवन्ति । यस्य मनसि या भावना जायते तद्नुसारं सः तद् कार्यं करोति । केचन जनाः शारीरिकपरिश्रममधिकतया कुर्वन्ति । केचन जनाः मानसिकपरिश्रममधिकतया कुर्वन्ति । ये शारीरिककार्याणि कुर्वन्तः भवन्ति, तेषां व्यक्तित्वं भिन्नं वर्तते । अतः यो यस्मिन् कार्ये मग्नो भवति तस्यावश्यं व्यक्तित्वं विकास भवत्येव । शिक्षितजनानां व्यक्तित्वे भिन्नो भवति । डा. सर्वपल्ली राधाकृष्णन् शिक्षामाध्यमेन व्यक्तित्वविकासं चकार । ते बाल्यात् आरभ्य विद्यालये समीचीनतया अध्ययनं चक्रुः । ते महोदयाः शिक्षकवृत्त्याः आरभ्य भारतदेशस्य प्रथमनागरिकरूपेण राष्ट्रपतः आसन्दे विराजितवन्तः । तेषामाङ्ल-भाषायां बहुदक्षता आसीत् । श्रीमद्भगवद्गीतायाः आंग्लभाषायामनुवादं चकार । रूषदेशस्य कर्णधारः षृलिन् अपि डॉ. सर्वपल्ली राधाकृष्णन् महोदयस्य बहुसम्मानं कृतवान् । डॉ. सर्वपल्लीराधाकृष्णन् तमिलनाडुराज्यस्य प्रेसिडंसी महाविद्यालये दर्शनविभागे अध्यापकरूपेण नियुक्तः आसीत् । ततः परं कोलकाताविश्वविद्यालये कार्यं कृतवान् । अनन्तरम् आन्ध्रविश्वविद्यालये कुलपतिरूपेण सुचारुरूपेण कार्यं चकारः । भारतीय हिन्दु विश्वविद्यालये कुलपति-रूपेण आसीत् । 1948-1949 विश्वविद्यालयायोगः तेन निर्मितः । ते दार्शनिकचिन्तका आसन् । अनेन अस्माभिः ज्ञायते यत् कथं सुशिक्षामाध्यमेन जनस्य व्यक्तित्वविकासः अभवत् । ते अध्यापकस्य विषये किञ्चित् अवदन् ।

If Teachers will run, Student will be Walk,<br>
If Teacher will walk, Student will be Sit,<br>
If Teacher will sit, Student will be Sleep,<br>
If Teacher will sleep, Student will be die.

So we have to very carefully to students teach in classrooms, because students are Nation builder.

डॉ. ए. पी. जे. अब्दुल कलाम महोदयानां व्यक्तित्वं सम्यक् आसीत् । एते महोदयाः बहुसंघर्षं कृत्वा सफलमानवस्य उदाहरणम् अददन् । एते मिसाइलमेन उपाधिना भूषित आसीत् । एते महोदयाः अकथयन् - प्राथमिकशिक्षकाणां कृते सम्मानः अवश्यं भवेत् । यतो हि प्राथमिकशिक्षकाः एव कोमलमतिच्छात्रैः सह मिलित्वा समीचीनरूपेण पाठं बोधयन्ति । यथा कुम्भकारः दण्डचक्रसाहाय्येन घटं निर्माति । तथैव अध्यापकः सरलतया छात्रान् पाठं पाठयति । डॉ. ए. पी. जे. अब्दुल कलाम महोदयाः एतादृशाः सज्जनाः आसन् यत् सर्वे जनाः सम्मानं कुर्वन्तः सन्ति । एते महोदयाः मतदानं विना भारतस्य द्वादशतमराष्ट्रपतित्वेन आसीनाः अभवन् । अनेन अस्माभिः ज्ञातुं शक्यते यत् कथं सर्वे जनाः डॉ. ए. पी. जे. अब्दुल कलामं प्रति प्रीतिमकुर्वन् । एते महोदयाः हितकाराणि बहुनि वाक्यानि ऊचुः ।

Dream, Dream, Dream,<br>
Dreams transfer into thoughts and<br>
Thoughts result into action.

We cannot change our future. But we can change our habits surly habits will change our future.

If you salute your duty.
You don't need to salute anybody.
If you pollute your duty
You have to salute everybody.

साधनाक्षेत्रे उत्कृष्टजीवनचर्यया कार्यकुशलतया च बहुसम्मानैः सम्मानितः स सप्तनवत्यधिकोनविंशशततमे (1997) भारतवर्षे 'भारतरत्नम्' इत्युपाधिना भूषितः ।

एते बालेषु नितरां स्निह्यन्ति । बाला एव भाविनागरिकाः । तेषां कृते स सदा आशावाणीं श्रावयति, अग्रे सर्तुं च प्रेरयति, यत्र यत्र याति तत्र बालैः सह मिलति, उपविशति, हसति, आलपति, विभिन्नान् प्रश्नान् पृष्ट्वा समुचितशिक्षां ददाति । उच्चलक्ष्यप्राप्तये स्वप्नं पश्य, समयानुवर्ती भव, ज्ञानप्राप्तये कठिनं श्रमं कुरु, श्रमणैव सफलता लभ्यते, श्रमेण कस्याऽपि प्राणाः न यान्ति, सुतरामालस्यं प्राणनाशस्य कारणं 'स्यादित्त्युपदेशवाणी' स बालेभ्यः प्रददाति । रामचन्द्रः मर्यादापुरुषोत्तमनाम्ना प्रसिद्धो वर्तते । रामायणे दशरथस्य ज्येष्ठपुत्रः रामचन्द्रः आसीत् । अयोध्यायां राज्याभिषेकसमये रामचन्द्रस्य नाम उद्घोषितमासीत् । सर्वे प्रजाः सानन्देन आसन् । परन्तु सायंकाले यदा रामचन्द्रः अश्रृणोत् यत् प्रथमवरेण भरतस्य राज्याभिषकः भविष्यति । द्वितीयवरेण रामचन्द्रः चतुर्दशवर्षाणि वनवासं गमिष्यति । एतां वार्ता श्रुत्वा रामचन्द्रस्य किमपि प्रतिक्रिया नैव आसीत् । सीताऽपि एतादृशीं वार्ता श्रुत्वा मनसि दुःखिता अभवत् । रामचन्द्रः सीतां बोधयति यत् अहमेव वनं गमिष्यामि । भवती अत्रैव निवसत् । वन्यवृत्तिरिमां शश्वदात्मानुगमनेन गाम् । विद्याभ्यसनेनैव प्रसादयितुमर्हत ।

**विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं**
**विद्याभोगकरी यशः सुखकरी विद्या गुरूणां गुरुः ।**
**विद्या बन्धुजनो विदेशगमने विद्या परा देवता**
**विद्या राजसु पूज्यते न तु धनं विद्याविहीनः पशुः ॥**

**सहायकाचार्यः, शिक्षाविभागः,**
**केन्द्रीयसंस्कृतविश्वविद्यालयः**
**क. जे. सोमैयापरिसरः**
**विद्याविहारः, मुम्बई ।**



# भारतीयशिक्षाशास्त्रिणां विध्यनुगुणं संस्कृतशिक्षणे नवोन्मेषः

✍ डॉ. विनोदकुमारशर्मा

**(शिक्षा काचिन्नवीना प्रक्रिया नास्ति । तथापि युगानुगुणं तत्र नवत्वं वरणीयमेव । अत उच्यते - 'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः' इति । शिक्षा एका सामाजिकी क्रिया येन छात्राणामधिगमो जायते, तदनुसारं व्यवहारज्ञानञ्च भवति । इयं शिक्षा भारतीयपरम्परायां वेदाङ्गत्वेन ज्ञायते । किन्तु वैदिककालादारभ्य समयानुगुणं शिक्षापद्धतौ नवत्वमाचार्यैः प्रतिपाद्यते । अत्र प्रबन्धे आधुनिक-भारतीय-शिक्षाशास्त्रिणां सामान्यपरिचयपुरस्सरं तेषां शिक्षणविधयः लेखकेन उपस्थापिताः ।)**

**शोधसारः** - भारतीयशिक्षाशास्त्रिणः स्वप्रतिभया योग्यतया पाण्डित्येन च भारतीयदर्शनं, विद्यालयीय-महाविद्यालयीयविश्वविद्यालयीयपाठ्यचर्यां नितरां प्रभावितवन्तः । एते महान्तः पण्डिताः शिक्षणविधिम् आधारीकृत्य स्वकीयचिन्तनानि प्रकटितवन्तः । प्रत्येके शिक्षाशास्त्रिणः भिन्नभिन्नशिक्षणविधीनां व्यावहारिकप्रयोगं कृतवन्तः । अस्मिन् शोधपत्र स्वातन्त्र्यात् पूर्वोत्तरकाल प्रख्यातभारतीयशिक्षाशास्त्रिणां सामान्यपरिचयपुरस्सरं प्रस्तावितविधेः चिन्तनं कृतमस्ति । अत्र स्वामिदयानन्द - डॉ. एनोबिसेन्टमहोदया-श्रीरवीन्द्रनाथठाकुर-महामना मदनमोहनमाल-वीय-स्वामिविवेकानन्द-महात्मागाँधी-अरविन्द डॉ.सर्वपल्ली राधाकृष्ण-आचार्यो विनोबा भावे-डॉ.जाकिरहूसेन-प्रभृतीनां शिक्षाशास्त्रिणां शिक्षणविधयः संस्कृतशिक्षणे नवोन्मेषं करोति इत्याख्यातम् ।

**सङ्केतशब्दाः** - शिक्षणविधयः, शिक्षणसूत्राणि, उपयुक्तता, व्यावहारिकता, प्रासङ्गिकता ।

**स्वामी दयानन्दः** - स्वामिदयानन्दस्य जन्म गुर्जरप्रान्तस्य काठियावाड़क्षेत्रस्य मौरवीनामप्रदेशस्य 'टङ्कारा' इत्याख्ये क्षेत्रे एकस्मिन् सुशिक्षिते विप्रवंशे 1824 तमैशाब्दे सितम्बरमासस्य द्वादशतमे दिनाङ्के भाद्रपदमासस्य शुक्लपक्षस्य नवम्यां तिथौ बृहस्पतिवासरेऽभवत् । शिवार्चकस्तस्य पिता संकर्षणलालस्त्रिवेदी सामवेदिनः औदीच्यब्राह्मणस्य श्रीलालमहाभागस्य पुत्र आसीत् ।

**शिक्षणविधिः** - स्वामी दयानन्दः शिक्षणाय कस्यापि मनोवैज्ञानिकविधेर्प्रतिपादनं न कृतवान् । एतत् सम्भवं वर्तते यत् शिक्षणसम्बन्धिनं किमपि तत्त्वम् आनुषांगिकरूपेण मनोवैज्ञानिकसिद्धान्तानुकूलं भवेत्, परं तेन शिक्षणविधिसन्दर्भे न किमपि निर्दिष्टम् । तेन प्रतिपादितेषु शिक्षणविधिषु - शब्दार्थः, व्युत्पत्तिः, अनुवादः, व्याख्यानम्, प्रवचनम्, व्याकरणदृष्ट्या शब्दानां पारस्पारिकसम्बन्धश्चेति प्रमुखा आसन् । शिक्षणकाले शिक्षकः शुद्धोच्चारणेन छात्राणा- मुच्चारणं परिष्कारयेत् । स्वामिदयानन्दमते शुद्धोच्चारणस्य, व्यायामस्य, धनुर्वेदस्य, आयुर्वेदस्य शिल्पानाञ्च शिक्षणं प्रायोगिकरूपेण विधेयम् । स्वामिदयानन्दो ज्ञानाय इन्द्रियाणां प्रयोगमुचितं मनुते

स्म । स स्वयमपि शास्त्रार्थे विदग्ध आसीत् । शंकायाः समाधानाय स प्रश्नोत्तरमुचितमनुभूतवान् । स ज्ञानार्जनाय वार्तालापविधेः समर्थकोऽप्यासीत् ।

**शिक्षायाः माध्यमः** – स्वामी दयानन्दो मातृभाषामेव शिक्षायाः माध्यमरूपेण स्वीकृतवान् । तन्मते बालकस्य प्रारम्भिकी शिक्षा मातृभाषामाध्यमेनैव भवेत् । परं स बालकस्य कृते एकस्या एव भाषायाः ज्ञानं पर्याप्तं न मनुते स्म । स्वामिदयानन्दस्य मतमासीद्यत् 'यदा बालकः पञ्चवर्षात्मको भवति तदैव संस्कृतस्य वर्णमालायाः बोधः करणीयः । तस्मिन्नेव काले तस्मै एकस्याः वैदेशिकभाषायाः अपि ज्ञानं प्रदेयम्' इति ।

**डॉ. एनी बिसेण्टमहोदया** – डॉ. एनीबेसेन्टमहोदयायाः जन्म ईसायाः 1847 तमे वर्षे अक्टूबरमासस्य प्रथमतालिकायां ब्रिटेनदेशस्य लन्दननगरेऽभवत् । एनीबेसेन्टमहोदयायाः पितुर्नाम वुडमहोदय आसीत् । स आङ्ग्लीय आसीत् परं तस्या माता तु 'आयरिश' इति आसीत् ।

**शिक्षणपद्धतिः** – तस्याः मते शिक्षणविधेः शिक्षायां स्वकीयं स्थानं वर्तते । विधिविशेषस्यावलम्बनं विना शिक्षकः शैक्षणि– कोद्देशपूर्तौ काठिन्यम् अनुभवति । परं शिक्षाया न भवति कोऽपि निर्धारितः स्तरः यस्य हि लाभो बालकस्य लक्ष्यं भवेत् । डा. एनीबेसन्टमहोदयानुसारम् –

'शिक्षा तु वस्तुतः प्रेरणा भवति यया प्रेरितो भूत्वा छात्रः स्वबहुमुखिप्रतिभायाः विकासं विदधाति' इति ।

**श्रीरवीन्द्रनाथठाकुरः** – श्रीमतो रवीन्द्रनाथठाकुरस्य जन्म बंगालप्रान्तस्य प्रख्याते टैगोरनामके वंशे 1861 तमेऽब्दे मईमासस्य षष्ठदिनाङ्के कलकत्तानगरेऽभवत् । तस्य पिता महर्षिः देवेन्द्रनाथठाकुर आसीत् । टैगोरवंशः स्वसमृद्धये, कलायै, विद्यायै संगीताय च समग्रे बंगालप्रदेशे प्रख्यात आसीत् । रवीन्द्रनाथठाकुरः स्वपितुः देशभक्तिं विद्वत्तां धर्मप्रियतां सुजनतांप्र च उत्तराधिकाररूपेणाप्तवान् । यद्यपि सः स्वभ्रातृषु भगिनीषु च कनिष्ठस्तथापि स्वयशसा न केवलं टैगोरवंशं प्रत्युत समग्रमपि देशं गौरवान्वितं कृतवान् ।

भारते 1909 मम् अब्दपर्यन्तं रवीन्द्रनाथठाकुरमहोदयो राजनीतिक्षेत्रेऽपि कार्यं कृतवान् । तस्मिन् समये साहित्यसेवायामपि अनवतररूपेण स रत आसीत् । तेन कथाः, नाटकानि पद्यानि च लिखितानि । परं कविरूपेण साहित्यकाररूपेण च तदीया ख्यातिर्देशस्य सीमानमुदलङ्घयत् ।1913 तमेऽब्दे स 'गीताञ्जलिः' इति काव्यकृतये 'नोबेल' इति नामधेयं सुप्रतिष्ठितम् अन्ताराष्ट्रियं पुरस्कारं लब्धवान् ।

**शिक्षणविधिः** – स बालकानां स्वाभाविकरुचिषु आवेगेषु च आधारितं शिक्षणविधिं कामयते स्म । तन्मते शिक्षणविधिः जीवनस्य यथार्थपरिस्थितिना, प्रकृतेः यथार्थतत्त्वैः, समाजस्य च यथार्थजीवनेनानुकूलः कारणीयः । ठाकुरस्य मतानुसारं शिक्षणविधिषु वादविवादस्य प्रश्नोत्तरस्य च प्रयोगः करणीयः । तेन शिक्षणविधिषु नृत्याभिनययोः हस्त–क्रयायाश्च स्थानं प्रदाय शारीरिकक्रियायाः महत्त्वं प्रदत्तं 'क्रियाविधेश्च' प्रयोगः प्रस्तावितः ।

स शिक्षणविधिषु बालकानामनुभवानाम् इन्द्रियाणाञ्च प्रयोगं वाञ्छति स्म । शिक्षणस्य सर्वोत्तमविधिं प्रतिपादयता ठाकुरेण लिखितं यत् – 'भ्रमणकाले पठनं शिक्षणस्य सर्वोत्तमो विधिः वर्तते' इति ।

**महामना मदनमोहनमालवीयः** – भारतस्य सुपुत्रेषु विशिष्टानां देशभक्तानां शिक्षाविशारदानां श्रीमतां महामनामदनमोहनमालवीयमहाभागानां जन्म क्रिष्टोः एकषष्ट्युत्तराष्टादशशततमेऽब्दे दिसम्बरमासस्य पञ्चविंशतितमे दिनाङ्के (25-12-1861) भारतस्य संयुक्तप्रान्तस्य (सम्प्रत्युत्तरप्रदेशस्य) इलाहाबादनगरस्य अहिमापुरवसतौ अभवत् ।

**शिक्षायाः लक्ष्यम्** – शिक्षाया आदर्शकल्पनया आधारितास्तेषां विचारा आसन् यद्देशे सुपुत्राः भवेयुरिति । यैः भारतमातुः तथा च हिन्दुसमाजस्य कल्याणं स्यात् । भारतीयाः युवकाः युवतयश्च तथा स्युः यत्तेषां मनो देशसेवायां भवेत् । शिक्षायाः माध्यमेन ते प्राचीनानाम् आर्याणामिव भारतीयेष्वप्युन्नतं चरित्रं वाञ्छन्ति स्म । छात्राणां स्वास्थ्येन सह धार्मिकतायाः विकासमपि ते कामयन्ते स्म । मालवीयमहोदयाः शिक्षायाः उपलब्धानां साधनानां पूर्णमुपयोगं स्यादिति सन्दर्भे बहुयत्नं कृतवन्तः । उद्योगव्यापारयोः क्षेत्रेऽपि ते आधुनिकपद्धतीनां स्वीकरणस्य पक्षधरा आसन् । तैः जीवनपर्यन्तं छात्राणाम् उन्नत्यै चिन्तनं कृतम् । ते छात्रान् निर्भीकान् अनुशासिताञ्च कर्तुं वाञ्छन्ति स्म ।

**स्वामिविवेकानन्दः** – स्वामिविवेकानन्दस्य जन्म 1863 तमेऽब्दे, जनवरीमासस्य द्वादशतमे दिनाङ्के प्रातःकालेऽभवत् । तस्मिन् दिने पौषसंक्रान्तिरासीत् । तेषां जन्मस्थलं बंगालप्रान्तस्य कलकत्तानगरस्य 'सितुलियापल्ली' इति नामकमासीत् ।

**शिक्षणविधिः** – मनस एकाग्रतायाः प्राप्त्यर्थं स्वामिविवकानन्दो ब्रह्मचर्यस्य पालनमनिवार्यं मनुते स्म । तेन प्रतिपादितं यद् द्वादशवर्षपर्यन्तमखण्डितेन ब्रह्मचर्यपालनेनैव जनः चित्तस्य एकाग्रशक्तिं प्राप्तुं शक्नोति । ब्रह्मचर्येणौशयो मनसा, वाचा कर्मणा च सर्वस्मिन् परिस्थितौ पवित्रतायाः भावो वर्तते । ब्रह्मचर्यं विना मानवे आत्मनि श्रद्धायाः विश्वासस्य च प्रादुर्भावो न सम्भवति । अतः बालकेभ्यः प्रारम्भादेव श्रद्धाया आत्मविश्वासस्य च शिक्षा प्रदेया ।

**महात्मागाँधी** – महान् व्यावहारिको दार्शनिको राजनीतिज्ञः शिक्षाशास्त्री च 'मोहनदासः करमचन्दः गाँधी' इत्यस्य महोदयस्य जन्म गुजरातप्रान्तस्य काठियावाड़क्षेत्रस्य पोरबन्दरनामके स्थले अक्टूबरमासस्य द्वितीयायां तालिकायां 1869 तमेऽब्दे अभवत् । तस्य पितुर्नाम 'करमचन्दगाँधी' इत्यासीत् । स पोरबन्दरराज्यस्य दीवानपदे कार्यरत आसीत् । तस्य मातुर्नाम 'पुतलीबाई' इत्यासीत् । सा साध्वी निष्ठावती च महिलाऽऽसीत् । तस्याः हिन्दूधर्मस्य व्रतोपवासादिषु दृढ़ो विश्वास आसीत् ।

**शिक्षणविधिः** – गान्धिनः शिक्षायाः योजनायाः कृते निर्मिता 'डॉ. जाँकिरहुसैनसमितिः' तदनुसारम् – 'गाँधिमहोदयेन स्व– शिक्षणविधौ, सहयोगिक्रियायाम्, नियोजने, यथार्थतायाम्, आत्मकार्यप्रस्तुतौ वैयक्तिकोत्तरदायित्वे च बलं प्रदत्तमस्ति' इति ।

उपर्युक्तेभ्योऽतिरिक्तमपि निरीक्षणपरीक्षणप्रभृतीनामन्येषां सिद्धान्तानां स्थानं गाँधिना स्वशिक्षणविधौ प्रदत्तं वर्तते । तद्यथा –

1. लेखनशिक्षणात्पूर्वं पठनशिक्षणं वर्णमालाशिक्षणाच्च पूर्वं चित्रकलाप्रशिक्षणम् इति,
2. कर्मणाधिगमः।
3. अनुभवेनाधिगमः।
4. अधिगमक्रियासु सहसम्बन्धश्चेति ।

अत्रापि स परीक्षणस्य व्यवस्थायाः पक्षधरः आसीत् ।

**महर्षिः अरविन्दघोषः** – शिक्षायां राष्ट्रियान्दोलनस्य प्रणेतुः श्री अरविन्दघोषस्य जन्म अगस्तमासस्य पञ्चदशदिनाङ्के 1872 तमेऽब्दे कलकत्तानगरस्य घोषपरिवारेऽभवत् ।

**शिक्षणविधिः** – श्रीअरविन्दः शिक्षणस्य क्रमिकविधेः समर्थक आसीत् । अस्मिन् विधौ यथा हि साम्प्रतं प्रचलति यद् बालकाय एकस्मिन् काले अनेकेषां विषयाणां शिक्षा न दीयते । एतद्विपरीतं केवलमेकस्य विषयद्वयस्य वा शिक्षा तस्मै प्रदीयते । यदा स एतेषां विषयाणां ज्ञानं प्राप्नोति तर्हि तस्मै अन्येषां विषयाणां शिक्षा दीयते । महर्षिः श्रीअरविन्द एनं विधिमेव सर्वथोपयुक्तं मनुते स्म ।

श्रीअरविन्दः स्वकीयं 'क्रमिकशिक्षणविधिं' केषुचन विशिष्टेषु सिद्धान्तेषु आधारितं कृतवान् –

1. क्रिययाधिगमः,
2. बालकस्य सहयोगः,
3. बालकस्य स्वतन्त्रता,
4. स्नेहस्य सहानुभूत्याश्च प्रदर्शनम्,
5. बालकस्य रुचीनामध्ययनम्,
6. शिक्षायाः माध्यमः – मातृभाषा,
7. बालकस्य स्वप्रयासस्य स्वानुभवस्य च प्रोत्साहनम्,
8. विषयाणां प्रकृत्यानुसारं बालकस्य शक्तीनां प्रयोगश्चति ।

**डॉ. सर्वपल्लीराधाकृष्णन्** - डॉ. राधाकृष्णमहोदयानां जन्म सितम्बरमासस्य पञ्चमे दिनाङ्के 1888 तमेऽब्दे मद्रासनगरतः चत्वारिंशत्मीलपरिमिते सुदूरे उत्तरपश्चिमे भागे सुब्रह्मण्यकार्तिकेयमन्दिरे तेलुगुब्राह्मणपरिवारे अभवत् ।

**शिक्षणविधिः** – डॉ. राधाकृष्णमहोदयः शिक्षणप्रक्रियायां ज्ञानप्राप्तये विविधविधीनां निरूपणं कृतवान् । तद्यथा – प्रत्यक्षविधिः – एतेन विधिना शिक्षको बालकभ्यः शब्दानाम्प्रत्ययानां प्रतीकानाञ्च निर्मितिं कर्तुं शक्नोति। सर्वेषां विज्ञानानामध्ययनमध्यापनञ्च प्रत्यक्षविधिना सम्भवति । यतो हि प्रत्यक्षतया प्रदत्तं ज्ञानं स्थायि भवति ।

**अनुमानविधिः** – दार्शनिकस्य तस्य मतमासीद्यत् विज्ञानस्य, गणितस्य समाजशास्त्रस्य च अध्ययने अनुमानविधेः प्रयोगः समुचितो वर्तते । एतेनैव तर्कशक्तिरपि विकसिता जायते ।

**शब्दविधिः** – डॉ. राधाकृष्णमहोदयस्य मतमासीद्यत् स्थायिज्ञानं शब्दविधिनैव प्रदेयम् । यतो हि 'शब्द' नाम स्वतन्त्रस्रोतो वर्तते ।

डॉ. राधाकृष्णमहोदयः शिक्षणप्रक्रियायां वाचनम्, चिन्तनम्, मननं व्याख्यानम् इत्येतेभ्योऽथ च ट्यूटोरियलशिक्षणाय च स्थानं प्रदत्तवान् ।

**आचार्यो विनोबा भावे** - महाराष्ट्रप्रान्तस्य कुलाबाजनपदस्य गोगादानामके ग्रामे ब्राह्मणकुले सितम्बरमासस्य एकादशतमे दिनाङ्के 1895 तमेऽब्दे विनायकनरहरभावे इत्यभिधानवतो बालकस्य जन्म अभवत् । तस्य पितुर्नाम श्रीनरहरपन्तः मातुर्नाम तु रूक्मिणी बाइ इत्यासीत् । विनायकनरहरभावेमहोदयस्य प्रारम्भिकी शिक्षा पितामहपितामह्योः सान्निध्ये स्वकीये ग्रामे एव सम्पन्ना । स्वकीयात् प्रारम्भिकजीवनादेव स प्रकृतिसौन्दर्यात् गृहस्य वातावरणाच्च प्रभावित आसीत् ।

**विनोबामहोदयस्य कृतित्वम्** – विनोबामहाभागाः भारतदेशस्यानन्याः भक्ता आसन् । ते भारतस्य पुरातनकलायां संस्कृतौ च विमुग्धा आसन् । ते जीवने बहुविधानाध्यात्मिकप्रयोगान् कृतवन्तः । वैदिकवाङ्मयस्य, धर्मग्रन्थानाम्, पुराणानाम्, रामायणमहाभारतादिग्रन्थानां परीक्षणमाधुनिकतायाः निकषे विधाय ते सिद्धमिदं कृतवन्तः यत् प्राचीने आध्यात्मिक शाश्वतं सत्यं तिष्ठति इति एवम्प्रकारेण तेषां जीवनदर्शने प्राचीनतायाः आधुनिकतायाश्च विचित्रं सम्मोहकञ्च सम्मिश्रणमासीत् । तेषां दर्शनं स्वविरचिते ग्रन्थे विविधेषु स्थलेषु प्रदत्तेषु भाषणेषु च प्राप्यते। तैर्विलिखिताः केचन प्रमुखाः ग्रन्थाः अत्र प्रदीयन्ते ।

1. बापू के चरणो में,
2. गाँधीः जैसा दखा-समझा विनोबा ने,
3. गीता प्रवचन,

4. धम्मपद,
5. स्थितप्रज्ञ दर्शन,
6. मनुशासनम्,
7. भागवत् धर्म सार,
8. गीता चिन्तनिका,
9. प्रिस्त धर्मसार,
10. गुरु बोधसार,
11. रुहुल कुरआन् (अरबी),
12. ईशावास्य वृत्ति,
13. अष्टादशी,
14. साम्य सूत्र,
15. विनयाञ्जलि,
16. विनोबा चिन्तन,
17. तीसरी शक्ति,
18. स्त्रीशक्ति,
19. नारी की महिमा,
20. नीति निर्झर,
21. सप्त शक्तियाँ,
22. जीवन दृष्टि,
23. सत्याग्रह विचार,
24. लोकनीति,
25. भूदानगंगा (8 भाग),
26. मुहब्बत का पैगाम,
27. शान्ति सेना,
28. आचार्य कुल,
29. खादी विचार,

30. थॉटस् ऑन एज्यूकेशन (अंग्रेजी),
31. डेमोक्रेटिक वेल्यूज (अंग्रेजी),
32. स्टेड फास्ट विज्डम (अंग्रेजी),
33. स्वराज शास्त्र (अंग्रेजी),
34. लैंग्वेज प्रॉब्लम (अंग्रेजी),
35. रैंडम रिफ्रलैक्शन्स (अंग्रेजी),
36. सर्वोदय विचार,
37. विनाबा व्यक्तित्व और विचार (संकलन),
38. विनोबा विचार पोथी,
39. राजघाट की सन्निधि में,
40. विनोबा के विचार (संग्रह),
41. भूदान यज्ञ,
42. जीवन और शिक्षण,
43. सर्वोदय सन्देश,
44. राजनीति से लोकनीति की ओर,
45. सर्वोदय विचार और स्वराज्य शास्त्र ।

**डॉ. जाँकिरहुसैनः** - डॉ. जाँकिरहुसैनमहोदयस्य जन्म सप्तनवत्युत्तराष्टादशतमे ईशवीयवर्षे फरवरीमासस्य अष्टभ्यां तारिकायां (08-02-1897) हैदराबादनगरस्यैकस्मिन् सुशिक्षिते सम्भ्रान्ते च यवनकुलैभवत् । प्रख्यातस्य राष्ट्रवादिनः डॉ. जाँकिरहुसैनमहोदयस्य नाम भारतस्य नेतृषु, विचारकेषु समाजपरिष्कारेषु शिक्षाशास्त्रिषु चातीव महत्त्वं धारयति । स आत्मानमाजीवनं शिक्षकरूपेण मनुते स्म । गान्धिनो विचारैः प्रभावितो भूत्वापि तस्य शिक्षादर्शनं स्पष्टरूपेण वैयक्तिकमेवाऽसीत् । तन्मते सच्छिक्षा सैव वर्तते यस्मिन् बालकस्य शारीरिको विकासो भवेदेव, तस्य बुद्धेर्मनसः हस्ताद्यवयवान्यपि विकसितानि स्युः, बालानां व्यक्तित्वस्य तदीयत्वस्य च रक्षापूर्वकं शिक्षाया आयोजनं भवेत् । तत्कृते उन्नेतुं मार्गाः प्रशस्ताः स्युः । बालानां रुचिषु, गणेषु, प्रवृत्तिष्वपि वैभिन्न्यं भवत्येव । अत एव तस्य वैयक्तिकभिन्नतायाः अनुसारमव शिक्षाऽयोजनीया ।

वर्तमानेपि शिक्षाशास्त्रिभिः प्रस्तुताः सर्वे विधयः प्रासङ्गिकतां भजन्ते । कक्ष्याशिक्षणे स्तरानुगुणं पाठ्यविषयानुगुणं शिक्षणविधेः प्रयोगं कृत्वा शिक्षणोद्धेश्यानि पूरितानि स्युः ।

**सन्दर्भग्रन्थसूची -**

1. प्रो. लोकमान्यमिश्रः - भारतीयाः शिक्षाशास्त्रिणः ।
2. प्रो. लोकमान्यमिश्रः- पुरातनी शिक्षा ।
3. प्रो. लोकमान्यमिश्रः - साहित्यशिक्षणविधिः ।
4. शिक्षा में नवचिन्तन - . प्रो.रीता अरोडा ।

**संविदाध्यापकः ( शिक्षाविभागः )**
**केन्द्रीयसंस्कृतविश्वविद्यालयः**
**क. जे. सोमैयापरिसरः,**
**विद्याविहारः, मुम्बई ।**



# अध्यनाध्यापनानुक्षेत्रसङ्गतौ कण्टकार्जुनदिशा हास्यव्यङ्ग्यविमर्शः

✍ श्रीमती नम्रतापटेल

**( रसतत्त्वविवेकपरिपूर्णमत्या सकलशास्त्रप्रतिपादितविवच्यतत्त्वविवेचनशीलसाहित्यशास्त्रानुसन्धात्र्या च कण्टकार्जुनदिशा हास्यव्यङ्ग्यविमर्शोऽत्र नितान्तमेव सरलभाषया रुचिकरोदाहरणप्रतिपादनपरया शैल्या चोपस्थापितः । मन्ये, निश्चप्रचं शोधपत्रमिदं हास्यरसरसिकानां कविताकामिनीस्वरूपनिष्ठसौन्दर्यतत्त्व-समीक्षकाणां कृते चानन्ददायकं भविष्यति ।)**

**हास्यमहिमा** - ननु साहित्यं मानवजीवनस्य समाजस्य च प्रतिबिम्बं यतो यद्यत्वस्तु जीवने द्रष्टुं शक्यते तद्तद्वस्तु साहित्येऽपि । हास्यस्य महत्त्वं नैकैविद्वद्भिरूक्तं यथा -

1. "Laughter is the best medicine" इति बेनेट शर्फमहोदयेन,
2. "हास्यसाधनेन वयं जीवनस्य अत्याधिकाघातमपि मृदु कर्तुं शक्नुमः । सकृदेव यदि वयं हसितुमपठन् तर्हि जीवने अस्माकं स्थितिः कीयत्यपि क्लेशकारी भवति चेदपि सर्वामपि सोढुं शक्ता भवामः ।" इति बिल कोस्बिमहोदयेन,
3. "हास्यस्य क्षणान् विना व्यतितदिनम् अत्यधिकमसाधु वर्तते ।" इति ई. ई. कम्मिंग्समहोदयेन,
4. "हास्येन कोऽपि मरणमाप्नोतीति मया अदृष्टम् । परन्तु कोटिशजना हास्यं विना मरणमाप्नोतीति मया ज्ञायते"इति डॉ मदनकतरियावर्येण,
5. "वयं प्रसन्ना अतो हसामः' एवं नास्ति । 'वयं हसामः अतः प्रसन्नाः' इत्यस्ति ।" इति विलियम जेम्समहोदयेन,
6. "यदा अहं स्वयं हसामि तदा मम स्वकीयस्य भारो लघु भवति" इति रवीन्द्रनाथठाकुरमहोदयेन उदीरितम्।

**नवरसेषु हास्यरसस्य स्थानम्** -

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।**
**बीभत्साद्भुतशान्ताश्च काव्ये नव रसाः स्मृताः ॥** (रसगङ्गाधरः)

आचार्यभरतादिभिरष्टसु रसषु तथा आचार्यविश्वनाथादिभिनवेषु रसेष्वपि हासरसः परिगणितः । ननु हास्यरसस्य स्थायिभावो विकृतिदर्शनजन्यो हासः ।

**विकृतिजो भवेद्हास आकर्षणमसंशयम् । चित्तस्यात्र परा तुष्टिर्हास्यमतः प्रवर्तते ॥**

हास्यरसो रसाभावाद् भिन्नो यतो हास्यरसे अनौचित्यस्य रसदोषत्वेन प्रतीतिनं भवति । हास्यरसे आङ्गिकाभिव्यक्तेः स्पष्टत्वं तेन कारणेनैव स्मितहसितेत्यादयो हास्यरसस्य षड्भेदा भवन्ति । भेदाः - स्मितं हसितं विहसितम् उपहसितम् अपहसितम् अतिहसितम् चव । हास्यरसगते हासे चित्तस्य प्रसाद इति समाजगते संघर्षे तत्त्वमेतद्विश्रान्तिदायकम् । अपरञ्च तत्त्वनेतन्न हि उत्साहस्य कर्मणश्च विरोधीति समाजगते संघर्षे अपि अस्य योगसम्भावना । यावत् गम्भीरविषयो व्यङ्ग्ये भवति तावदेव सफलः स व्यङ्ग्यो भवतीति न्यायः । व्यङ्गयस्य मूलं हीनत्वं घृणा च भवति परन्तु व्यङ्ग्यकारस्य कवेः कौशल्यमिदं यत् पाठकहृदि मुख्यवस्तु उपलक्ष्य हीनत्वस्य घृणायाश्च गौणत्वं सिद्धयति ।

**संस्कृतसाहित्ये हास्यरसस्य स्थानम्** - यद्यपि हास्यरसो नवरसेषु परिगणिततथापि हास्यस्योदाहरणानि संस्कृतसाहित्ये अल्पान्येव । डॉ. हरिद्त्तशर्ममहोदयानुसारं संस्कृतसाहित्यस्य नवतिप्रतिशतभागः शृङ्गाररसयुक्तो विद्यते । केवलं दशप्रतिशतभागः अन्याष्टरसेषु विभक्तः । सुभाषितरत्नभाण्डागारेऽपि शृङ्गाररसस्य सर्वाधिक-पद्यानि सन्ति परन्तु हास्यपद्यानि तु केवलं षट्पञ्चाशदेव (५६)। हास्यरसः सामान्यतः अङ्गरसो मन्यते विद्षकादिपात्राणां च विनोदपूर्णसंवादे प्राप्यते । प्रहसने भाणे च अङ्गीरसपदं प्राप्नोति हास्यरसः ।

परन्तु सत्यमेतत् यत् यावत् परिश्रमो हास्यरसपूरितरचनाया लेखने भवति तावन्नैव शृङ्गारादिरसपूरितरचनायाम् । यतो हि हास्यपूर्णरचनायै रचयितुः शिष्टहास्यप्रयोगे क्षमता आवश्यकी । रसः स्वयं व्यङ्ग्यस्तेनैव कारणेन हास्योऽपि व्यङ्ग्यः । व्यङ्ग्येन हास्यस्य अभिव्यक्तिः साक्षान्न भूत्वा परिवर्तितक्रमे भवति । गम्भीरव्यङ्गरचनाया लेखनं साधारणं नास्ति यतः असावधानतया लेखने सति स एव व्यङ्ग्यः अश्लीलताम् असंयततां च प्राप्तुं सम्भवति । कस्मिन्नपि कटाक्षकरणं दोषदर्शनञ्च सरलं कार्यं परं दोषाभिज्ञत्वं मार्मिकपद्धत्या करणे दुष्करं भवति । आधुनिकसंस्कृतसाहित्ये हास्यसाहित्यस्य उदाहरणेषु - रुद्रदेवत्रिपाठिवर्येण रचितायां विनोदकाव्यत्रय्यां विनोदिनी, डिण्डिमः, हाहाहुहु इति काव्यत्रयं विद्यते । कण्टकार्जुनवर्येण विरचिताकण्टकाञ्जली उत्तमव्यङ्गसाहित्यस्य यथार्थचित्रणे साफल्यं भजति ।

**कण्टकार्जुनस्य 'कण्टकाञ्जली' इत्यस्याः परिचयः** - कण्टकार्जुनः स्वस्य परिचयः कण्टकाञ्जल्या आमुखे स्वयं ददाति यद् "अस्ति दाक्षिणात्ये जनपदे पुण्यपत्तनं नाम नगरम् । तत्र निःशेष-कवि-गुणापेतः, विविध-शास्त्राध्ययने क्षपितानेकसंवत्सरः,अनवरत-प्रवृत्त-चर्चाध्यापनादि-निमित्त-तारस्वर-भाषणोच्छुष्क-कण्ठः, प्रतिवादि-गजेन्द्र-निर्बहण-समर्जित-महाऽयशाः,ग्रन्थ-निबन्धादि-प्रसङ्गेन लिखित-कटि-दघ्न-कर्गज-भारो दुर्गृहीत-प्रदीर्घसमग्र नामा अर्जुनो नामको ग्रन्थकीटः प्रतिवसति ।" इति । अयं च कण्टकाञ्जलिः चतुःषष्ट्योत्तर

नवदशसहस्रतमे वर्षे जुलाई - मासस्य सप्तमे दिनाङ्के (०७-०७-१९६४) गोमन्तकीये संस्कृतसम्मेलने अंशतः पठित्वा प्रकाशतां नीतः, अर्थात् इतः षड्पञ्चाशद्वर्षेभ्यः प्राक् ।

कण्टकार्जुनविरचिता कण्टकाञ्जलिहास्यव्यङ्ग्यस्य श्रेष्ठा कृतिः वर्तते । इयं कृतिः शार्दूलविक्रीडतछन्दसि रचिता । कण्टकार्जुनेन ग्रन्थास्यामुखे आरम्भपद्यमिदम् वक्ति -

**सद्दृष्टं सुपरिज्ञातं सर्वानुभवगोचरम् ।**

**तत्काव्ये विनियोक्तव्यं कण्टकेन यथा कृतम् ॥**

कवेजीवनस्य प्रत्येकक्षेत्रात् यथा राजनीतिक-सामाजिक-धार्मिक-आथिक-शैक्षणिक-पारिवारिकक्षेत्रेभ्य एकत्रीकृतानि कण्टकानि कवेरञ्जल्यां स्थितानि दृष्ट्वा व्यङ्गपरकं काव्यं कण्टकार्जुनेन विरचितम् ।

ग्रन्थेऽस्मिन् द्वादशकण्टकाध्यायाः क्रमशस्तेषां नामानि इत्थं - मुखबन्धः, रामराज्यपद्धतिः, पञ्चशील-पद्धतिः, धर्मातीतपद्धतिः, जगदेकराष्ट्रपद्धतिः, विपाकपद्धतिः, लोकाग्रणीपद्धतिः, जीवनोद्योगपद्धतिः, विद्याविद्यार्थि-पद्धतिः, गार्हस्थ्यपद्धतिः, तत्त्ववित्पद्धतिः, अञ्जलिबन्धश्चेति । संक्षेपेण कथयितुं शक्यते यत् कविः कण्टकार्जुन-स्तस्मिन्कालवर्तिनीनां समस्यानां सम्यक् गहनम् अध्ययनं कृत्वा कण्टकाञ्जजिपद्यरूपेण प्रतिपादितवान् । माङ्गस्य मार्तण्डानां नीतिनायकानां राष्ट्ररक्षाधिकारिणां चाक्षेपान् उपदेशांश्च शृण्वन्नपि कण्टकार्जुनः कण्टकाञ्जल्याः रचना न स्थगितवान् ।

विद्याविद्यार्थिपद्धतिनामकेऽध्याये द्वात्रिंशद्कण्टकानि दर्शितानि कण्टकार्जुनेन । विविधविषयेषु व्यङ्ग्यः प्रदर्शितो यथा विद्यावतां गतिः, प्रशासनकृपा, शास्त्रिणो भागधेयम्, छत्रं, पण्डितः, नापितपण्डितौ, सुधाह्रदः, संस्कृतपण्डितः, संस्कृताध्येतुराकाङ्क्षा, वागीशः, अथ शब्दानुशासनम्, स्फोटः, ग्रन्थलेखनम्, गर्तं व्रज, भूगोलग्रन्थाः, दुर्भिक्षम् दुर्भिक्षम्, छात्रायणम्, विद्यार्थिरामायणम्, विद्यार्थिभारती, अपूर्वा संगीतगोष्ठी, आकाङ्क्षा, दोपिकादूषणम्, परीक्षकश्चेति ।

1. शास्त्रिणः भागधेयम्

**'शास्त्री शाकटिकोऽभवत्' - श्रुतमिदं, 'निर्वासितः' - वीक्षितं,**

**'कायस्थोऽपि च', 'चक्रधृक्' च - विदितं, 'मन्त्रिस्तुतत्' - एवं स्थितम् ।**

**'भिक्षुः', 'सौचिकः' - एतदस्ति, न मृषा 'भृत्योऽयरश्छत्रभृत्',**

**'मुख्यामात्यपदे' तु 'राजत' इति प्रत्येतु चेतः कथम् ?**

कविः अत्र शास्त्रिणो भागधेयमाश्चर्येण प्रतिपृच्छति यतः परम्परया भूरिपरिश्रमण च गहनसंस्कृताभ्यासं कृत्वा अपि शास्त्रिणः उचितव्यवसायाभावे अन्यव्यवसायमाश्रयन्ति । तेन व्यङ्गेन

कथितो यत् सर्वैरेतादृष्टा नैके शास्त्रिणः श्रुताः दृष्टाः वा ये शाकटिकाः, निर्वासिताः, कायस्थाः, चक्रधृगः नाम मोटर ड्रायव्हर (Motor Driver) इति आङ्ग्लयाम्, भिक्षवः, सौचिकाः, भृत्याः, छत्रभृन्तः वा उचितव्यवसायाभावेन भवन्ति । परन्तु कथम् एतत् अभवत् यत् एकः शास्त्री मुख्ये अमात्यपदे राजते इति आश्चर्यं प्रकटयति कण्टकार्जुनः।

वस्तुतः यदा कण्टकार्जुनेन व्यङ्ग्यमिदं प्रकटित तदा (१९५१-५६ वर्षेषु) लालबहादुरशास्त्रिवर्याः रेलमन्त्रीपदे आसन् । निश्चयेन श्लेषालङ्कारत्वेन शास्त्री इत्यस्मात् पदात् स्नातकोत्तीर्णछात्रास्तथा च लालबहादुरशास्त्रिवर्याः साकमेव स्वीक्रियेते ।

2. **नापितपण्डितौ** - **लोके मुण्डकवेदपारग इति ख्यातस्त्वकं चाहकं,**
**वाचां ते प्रसरोऽप्यखण्डितवपुः सिद्धो ममापीदृशः।**
**ज्ञातो नापितसंज्ञयास्यहमपि द्रव्यं जनैर्नापितः,**
**कस्मात् त्वां समुपासते, मयि कुतः सर्वे सदोदासते?**

पण्डितो नापितमुद्बोध्य कथयति यल्लोके तौमुण्डकवेदपारग इति ख्यातौ । नापितो जनानां मुण्डनकर्मणि पारङ्गतः पण्डितश्च मुण्डकोपनिषदि कुशलः । नापितस्य वाचां प्रसरोऽपि अखण्डितवपुसिद्धः, पण्डितस्यापीदृशः । नापितस्य तु संज्ञा एव नापितः, पण्डितस्यापि सम्प्रति सैव संज्ञा यतो जनैद्रव्यं न अपितः न अर्पितः । एवम् नापितपण्डितौ समानौ तथापि केन कारणेन जनाः नापितस्य समीपे आगच्छन्ति, पण्डिताच्च दूरं गच्छन्ति ? इत्यत्र कविना चित्रितं व्यङ्ग्यं यत्र समाजस्य इयं परिस्थितियत् शिक्षितोऽपि पण्डितः आत्मानम् अशिक्षितेन नापितेन तुलयति । अत्र पण्डितस्सन्नपि जनैः अवज्ञातः असम्मानितः अपूजितः अपृष्टश्च । धनवर्जितश्च सः गुणाः सन्तोऽपि आत्मनः भाग्यमवकुरुते।

3. **संस्कृतपण्डितः** - **'कस्त्वं?', 'संस्कृतपण्डितः', 'किमधुना ग्रथ्नासि?','टीकां नवां',**
**'ग्रन्थे कस्य?', 'ममैव', 'कुत्र सः', 'सखे, पश्चात् स लेखिष्यते'।**
**'धिङ् नेपथ्यमनङ्गतम् !', 'अङ्ग, विदितः पन्था बुधानां न ते,**
**येषां शुष्कतृणायितात्मवपुषां नेपथ्यमेवाखिलम् ॥**

कश्चित् जनः कञ्चित् संस्कृतपण्डितं पृच्छति यत् सः कः । पण्डितेनोक्तं यत् सः संस्कृतपण्डितः । पृष्टे सति यत् सः किं ग्रन्थ्नासि तेनोक्तं तेन नवा टीका ग्रन्थते । पुनराकाङ्क्षया पुरुषेण पृष्टं यत् कस्य ग्रन्थस्य नवा टीका ग्रथ्नासि । गर्वेण संस्कृतपण्डितः कथयति मम एव ग्रन्थस्य टीका ग्रन्थ्नासि । कुत्र अस्ति सः ग्रन्थः । संस्कृतपण्डितेन उक्तं यत् तस्य लेखनम् अवशिष्टम् तेन सः

पश्चात् लेखिष्यते । पुरुषेण पण्डितं मूढमिति मत्वा तस्य अनङ्गतं नपथ्यं धिक्करोति । तत्रापि पण्डितस्य हास्यं यत् नेपथ्यमेवाखिलम् नान्यत् ।

4. **स्फोटः -** **जापानेष्वभवत् पुरा बत बत स्फोटः क्षिपन् रोदसी**
**कश्मीरेष्वभवद् भविष्यति पुनः, मुम्बानगर्यामपि ।**
**गोवायामचिराद् इतः पुनरभूद् औरङ्गबादोदरे**
**लोकः सीदति शाब्दिकः पुनरसौ हर्षान्नरीनृत्यते ॥**

स्फोटविषयकं व्यङ्ग्यं प्रकटयति कविः । स्फोटपदस्य आशयः विस्फोटः अस्ति । परन्तु अन्तिमे चरणे कविना विस्फोटार्थ-स्फोटपदस्य व्याकरणे महाभाष्ये स्फोटपदस्य च द्वन्द्वः सुचारुतया प्रदर्शितः । कथमिति प्रथमं कविवक्ति यत् स्फोटो जापानेषु अभवत् ततो कश्मीरेषु ततो मुम्बापुर्यां ततः गोवायां तत औरङ्गाबादे । एवं विस्फोटेन जनाः निराशतां दराशां जनयन्ति । परन्तु शाब्दिका वैयाकरणा हर्षात् नरीनृत्यन्ति । स्फुटति अर्थो यस्मात् शब्दार्थबोधनं स्फोटः ।

5. **ग्रन्थलेखनम् -** **कल्याणे यदि ते स्पृहास्ति सुमते! मा पुस्तकं लिख्यताम्,**
**लेख्यं चेत् शिशुवाङ्मयं लिख सखे! शास्त्रे रुचिस्त्यज्यताम् ।**
**शास्त्रेसाहसिकोऽपि मा जडमते! ग्रन्थं बृहन्तं कुरु,**
**तत्रापि स्खलितोऽसि चेत्, हतमते! भिक्षाटनं स्वीकुरु ॥**

कविः कण्टकार्जुनो जनानां लेखकानां च शुभचिन्तको भूत्वा तान् सूचयति यत् हे कल्याणे हे सुमते यदि त्वं स्वस्य कल्याणमिच्छसि तर्हि पुस्तकं मा लिख्यताम् । यदि पुस्तकं लेख्यं तर्हि कृपया शिशुसाहित्यपुस्तकं लिख, शास्त्रे रुचिस्त्यज्यताम् । यदि शास्त्रे साहसिको भूत्वा त्वया शास्त्रग्रन्थलेखनस्य प्रारम्भः कृतस्तर्हि हे जडमते ! तं ग्रन्थं बृहन्तं न कुरु । तत्रापि यदि स्खलितोऽसि तर्हि हे हतमते ! किं करिष्यसि, भिक्षाटनं स्वीकुरु । भिक्षाटनं नाम जनसामान्यानां पुरतः प्रार्थनां क्रियतां यत् मदीयं पुस्तकं क्रीयताम् कृपया क्रीयताम् तथा अनुदानं दीयाम् इत्यादिप्रार्थनारूपं । ननु इयमेव समस्या शास्त्रग्रन्थकाराणाम् ।

6. **भूगोलग्रन्थाः -** **'ब्रह्माण्डं यदनन्तकोटिगणनागोणीमतीत्य स्थितं**
**सत्यं तत्र कणत्यसौ वसुमती पीलुस्ततो भारतः ।**
**ग्रन्थे तद्विषये प्रमादकणिकाः कासावसारा कथा !'**
**सारः केवलमर्थसंगतिफलं तद् ग्रन्थकृद् वेदिता ॥**

पद्यस्य भूमिकायत् पद्यरचनाकालतो नातिचिरं महाराष्ट्रराज्यशासनेन अनेकलक्षरूप्यकाणां व्ययं कृत्वा भूगोलविषयकानि पुस्तकानि विद्वद्भिलेखयित्वा सम्यक् मुद्रापयित्वा प्रकाशितानि । परन्तु तत्र पुस्तकेषु नैके नैके दोषाः प्रमादाश्च आप्लुताः । तन कारणेन एतानि पुस्तकानि सर्वैर्निन्दितानि । व्यतिकारेएतस्मिन् कविना पद्यमिदं रचितं तत्र पादत्रयं भूगोलपुस्तकलेखकवाक्यानि तुरीयं पादं कविवाक्यमेव ।

बृहति ब्रह्माण्डे कुत्र अस्माकं दोषाः महन्तः ? इति वक्तुं प्रयासं करोति लेखकः – 'ब्रह्माण्डं अनन्तकोटिगणनायां स्थितम् । तत्र कणतुल्या विद्यते पृथिवी । तत्रापि पीलुतुल्यं परमाणुतुल्यं भारतवर्षम्। तर्हि ग्रन्थे प्रमादकणिकाः अयं विषयस्तु असारकथावत् सिद्धः' अत्र कविः कूटयति एषु भूगोलग्रन्थेषु कः सारः, कोऽर्थश्चेति कवलम् ग्रन्थकारः विजानाति, नान्य ।

7. **छात्रायणम्** – **त्यक्त्वा सूर्यविबोधनेन शयनं कृत्वा चहाप्राशनं**
**चुम्बन् धूममुखीं सिने नटनटीस्तोत्रावलिं गायति ।**
**विद्यामन्दिरकन्यकाभिसरणं नित्यं सिनेदर्शनं**
**सान्ध्यः सौरसरित्तटे विधिरितिच्छात्रायणं मङ्गलम् ॥**

छात्रायणं नाम अद्यतनानां छात्राणां दिनचर्या । प्रातरूत्थायैव प्रथमं शौचस्नानादिकर्माणि न क्रियमाणैः छात्रैः शयनं त्यक्तवा प्रथमं चायपानं क्रियते । ततश्च ईशप्रार्थनां स्तोत्रगानादि च नहि कृत्वा धूममुखीं नाम सिगरेटं (Cigarette)चुम्बन् चलच्चित्रगीतानि गीयन्ते । हास्येन कविना तेभ्यो गीतेभ्यो नटनटीस्तोत्रावलि इति संज्ञा प्रदत्ता । तदनन्तरं विद्यामन्दिरं नाम महाविद्यालयं गत्वा तैः कन्याजनानामभिसरणम् अनुगमनादि च क्रियते । नित्यं देवालये देवदर्शनं न कृत्वा चलच्चित्रगृहं गत्वा सिनेदर्शनं तु अवश्यमेव क्रियते । सन्ध्याकाले सौरसरित्तटे गमनम् । सौरनाम सूराणां देवानां सरित्तटे प्रयाणं न सन्ध्याक्रियार्थं परं सुरापानार्थम् । छात्राणामेषा मङ्गला विधिः ।

मङ्गलपदेन काकुवक्रोक्तिप्रयोगः । तेन पद्येऽनुक्तविधः ग्राह्या । यथा प्रातरूत्थाय सर्वप्रथमं शौचस्नानादिकर्माणि, ततश्च ईशप्रार्थनां स्तोत्रगानादि, तदनन्तरं विद्यामन्दिरं नाम महाविद्यालयं गत्वा अभ्यासः । नित्यं देवालये देवदर्शनं ततश्च सन्ध्यावेलायां सन्ध्याकर्माणि ।

8. **विद्यार्थिरामायणम्** – **वर्गे कर्गजसायकैः प्रहरणं कन्याजनत्रासनं**
**तन्निर्वाचनयुद्धकौशलमपि क्रीडाङ्गणे हिण्डनम्**
**कण्टीने वसतिः, सिनेगृहरतिः तद् दीपिकाचर्वणं**

**क्लासोपासनमन्ततो विफलता विद्यार्थिरामायणम् ॥**

वर्गो नाम व्याख्यानमन्दिरं वन्दनीयञ्च परन्तु पवित्रेऽस्मिन् स्थाने समकालिकाः छात्राः किं किं कुर्वन्ति तेषु हास्यजन्यं पद्यं कण्टकार्जुनस्य । छात्राः कक्षायां कर्गजस्य सायकान् निर्माय तैः कर्गजसायकैः प्रहरन्ति । कुत्र चेत् व्याख्यातारं प्रति कन्याजनान् प्रति च प्रक्षिप्य तासु त्रासजा भवन्ति छात्राः । महाविद्यालये यदा छात्रनिर्वाचनस्य वातावरणं भवति तदातन्निर्वाचनस्य युद्धेऽपि कौशलं तेषां तच्च प्रकटयन्ति काले काले । वर्गकालांशे पठने अरुचिकारणेन क्रीडाङ्गणे तेषामटनेन कालयपनम् । वर्गखण्डे न भूत्वा एते महाविद्यालयीनाः छात्राः कण्टीने नाम उपाहारगृहे वसन्ति इति भाति । सिनेगृहैव तेषां सुखमिति । कक्षाकाले कालयापनं कृत्वा अन्ते परीक्षाकाले उत्तीर्ण्या दीपिकाचर्वणम् । तथापि अन्ततो विफलता प्राप्यते । कविनायं प्रक्रिया विद्यार्थिरामायणसंज्ञा प्रदीयते । यतो हि भूप्रवेशेन सीताया रामस्यापि एतदेव भागधेयमासीत् ।

कण्टकार्जुनेन पद्येऽस्मिन् आङ्गलपदानां बहुत्र उपयोगो विहितो यथा - कण्टीने (Canteen), सिने (Cinema), क्लास (Class) तेन भाषामिश्रणम् तथा जनभाषासु आङ्गलशब्दानां सहजप्रवेशः परिज्ञायते ।

9. **परीक्षकः** - **शुद्धं वत्स! तवोत्तरं नयनयोः प्रीतिं करोत्यक्षरं**
**पूर्णं चापि विवेचनं नवमपि क्वाप्यस्ति संयोजनम् ।**
**एतावद्धि पुरा मयापि लिखितं नासीत् परीक्षार्थिना**
**सिद्धिर्या तु मयार्जिता तदधिकां मत्तः कथं लप्स्यसे ।**

परीक्षाया उत्तरपत्राणि संशोधयन् परीक्षकस्य उक्तिरियं यन्मनसि छात्रं सम्बोध्य कथयति यत् हे वत्स ! तव उत्तरं तु शुद्धम् । तव अक्षरमपि मम नेत्रयोः प्रीतिकरम् । तव लिखितं विवेचनमपि पूर्णम् । कुत्रचित् पत्रे नवसंयोजनं मौलिकतां सहजतां चापि दृश्यते । एतावती सिद्धिस्तु मया अपि स्वविद्यार्थिजीवने नार्जिता तर्हि कथमहं तुभ्यं मत् अधिकतरान् गुणान् दास्यामि ? इत्येवं कविः शिक्षणजगतो दुर्दशां प्रदर्शयति यत् प्रायः परीक्षास्पर्धादिक्षेत्रेषुछात्राः शिक्षकेभ्योऽपि योग्यतराश्चेदपि गुणाङ्कान् सिद्धिश्च न प्राप्नुवन्ति ।

10. व्याख्यानम् - **विख्याता विदूषां पुरीति विषयः पूज्यो जनानामिति**
**वक्ता दूरत एष्यतीति फलकाः सर्वत्र ससज्जिताः।**
**क्लृप्तो मण्डप आयतो विनिहितास्ताराः स्वरक्षेपकाः**
**श्रोतारो दश पञ्च 'भूर्गिलतु मां' संयोजकः काङ्क्षति ॥**

व्याख्यानविषये व्यङ्ग्यं करोति कविः । यत् प्रत्येकस्य व्याख्यानस्य संयोजकस्य मनसि इयमेवाकाङ्क्षांधरति यदियं तु प्रसिद्धा नगरी विदूषां च नगरी तेन श्रोतारः अधिकाः स्युः । व्याख्यानविषयोऽपि जनानां मान्यः पूजितश्च स्यात् तेनापि श्रोतृगणाः अधिकाः स्युः । व्याख्यानस्य मुख्यवक्ता सुदूरस्थानादागमिष्यति तेनापि सभा श्रोतृपूर्णाभवेत् । किमधिकं सर्वत्रापि व्याख्यानसूचकफलकाः सुसज्जितास्तेन सर्वत्र सूचना प्राप्यते येतादृशं व्याख्यानमायोजितम् । शोभनो मण्डपोऽपि रचितः । ध्वनिक्षेपकयन्त्राणि मण्डपे स्थाने स्थाने विनिहितानि यैव्याख्यातुः स्वरः श्रोतृवृन्दकर्णान् सम्यक् प्राप्येत् ।

व्याख्यानसमयो भवति परन्तु धिक् धिक् केवलं पञ्च दश वा श्रोतारः पुरतः समुपस्थिताः। एतादृशे काले संयोजकः काङ्क्षति यत् 'भूर्गिलतु मां' अर्थात् 'हे भूमीदेवि! मां स्वमुखे ग्रसित्वा मुखमाच्छादयितुम् आश्रयं देहि' इति। श्रोतृणामभावेऽद्यापि सर्वत्र इयमेव विपन्नता।

**उपसंहारः** - कण्टकार्जुनस्य कण्टकाञ्जली तु हास्यपूरितं व्यङ्ग्यपूरितमस्त्येव परन्तु तत्र विशेषतः विद्याविद्यार्थिपद्धतिनिदर्शने यो व्यङ्ग्यः कविना तीक्ष्णदृष्ट्या छात्रजीवने शिक्षकजीवने समाजे च प्रतिस्थापितः स उल्लेखनीयो यतः अस्मिन् अध्ययनाध्यापनक्षेत्रेऽपि कवेः शिक्षाजगति अभावदृष्ट्या निःशंकभावेन पाठकानां ध्यानमत्राकर्षितम् । कविना सहजप्रकृत्या यदा यदा वर्तमानावस्थानां सुष्ठु चित्रणं दर्शितं यदा यदा च दोषाणां प्रकाशनं कृतं तदा तदा पाठकानां हास्यनदी सहजं प्रवहति । हास्येन कथितवस्तु समस्यानां दर्पणरुपं भवति, तेन पाठकानां प्रकृत्या अनायासेनैव यथार्थस्थितेः अवबोधोऽपि भवति । अद्यापि तस्य प्रासङ्गिता दरीदृश्यते इति शम् ।

**सन्दर्भग्रन्थसूची**

1. रसालोचनम् , ब्रह्मानन्दशर्मा, चम्पालाल रङ्का एन्ड् को., जयपुरम्, प्रथमसंस्करणम्, १९८५ ।
2. कण्टकाञ्जलिः, कण्टकार्जुनः, अश्वत्थ साहिती, पूना, १९६५ ।

**अनुसन्धात्री, साहित्यविभागः,**
**केन्द्रोयसंस्कृतविश्वविद्यालयः**
**क. जे. सोमैयापरिसरः,**
**विद्याविहारः, मुम्बई ।**



# शुक्लयजुर्वेदे कृषिरोषधिश्चेत्यनयोरध्ययनम्

✍श्री.पद्मराजरेग्मी

**(सर्वज्ञानमयो वेदः । वेदेभ्यः सर्वाणि शास्त्राणि समुद्भूतानि सन्ति । सर्वं वेदादेव प्रसिद्ध्यतीति प्रसिद्धिः। वेदे न केवलं यज्ञानुष्ठानपरका अपि तु कृषिशिल्पवाणिज्यायुर्वेदपरकाः मन्त्राः लभ्यन्ते । अत्र लघुशोध-प्रबन्धे केषाञ्चन वेदमन्त्राणामालोचनं तथा चैतेषां निगूढतत्त्वानामुद्घाटनपरो लेखकः कृषिकार्ये ओषधि-निर्माणे च मन्त्राणां भूमिकां विशदयतीति अहो वेदस्य वेदता इति ।)**

**भूमिका-** **प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते ।**
**एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता ॥**

**वेदशब्दस्य व्युत्पत्तिः** - विद् धातोः हलश्चेति सूत्रेण घञ् प्रत्ययेन निष्पन्नो भवति वेदशब्दः । यस्य व्यापकार्थो भवति ज्ञानम् । यद्यपि सत्ता, विचारः, लाभः एतेष्वर्थेष्वप्ययं शब्दः प्रवर्तते, तथापि सिंहावलोकनदृष्ट्या ज्ञानार्थे एव पूर्णतां याति ।

**अर्थाः-**

1. इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः । (सायणभाष्यम्)
2. मन्त्रब्राह्मणयोः वेदनामधेयम् । ( आपस्तम्ब गृ. सू.)
3. वेदोऽखिलो धर्ममूलम् । (मनुस्मृतिः २ -६ )

**प्रयोजनम्** - प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते, इति लौकिकदृष्ट्या विचारः क्रियत चेदपि प्रयोजनाभावः नैव दृश्यते। तद्यथा - ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च, इति महाभाष्यकारपतञ्जलिना ब्राह्मणानां निष्कारण धर्मत्वेन अस्याध्ययनं प्रतिपादितम् ।

**अङ्गानि-** वेदस्य षडङ्गानि सर्वैः विदितमव तथापि क्रमसम्प्राप्तत्वाद् अत्रोल्लेखयामि - १. शिक्षा, २. कल्पः, ३. निरुक्तम्, ४.व्याकरणम्, ५.ज्यौतिषम्, ६.छन्दः इति ।

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ कथ्यते । ज्योतिषामयनञ्चक्षुः निरुक्तं श्रोत्रमेव च ॥**
**शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम् । तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥**
**( पाणिनि शिक्षा )**

**विभाजनम्** - महात्मना वेदव्यासेन मन्दमतीन् मनुष्यान् विचिन्त्य एकस्यैव वेदस्य चतुरो विभाजनं कृत्वा पैल- वैशम्पायन-जैमिनि-सुमन्तुभ्यः चतुर्भ्यः शिष्यभ्यः ऋग्यजुःसामाथर्वाख्यक्रमेण वेदज्ञानम् उपदिदेश ।

**तात्पर्यम्** - वस्तुतः वेदशब्दस्य तात्पर्यं वैदिकसाहित्येन सह वर्तते । आपस्तम्बधर्मसूत्रे समस्त-वैदिकवाङ्मयस्य विभाजनं भागद्वये कृतमस्ति - १. मन्त्रभागे २. ब्राह्मणभागे च । मननात् मन्त्रः मन्त्राणां समूहः संहिता, अतः प्रथमे मन्त्रभागे संहिता आयाति । ताः संहिताः वैदिकवाङ्मये चतस्रः वर्तन्ते -

१. ऋक्संहिता, २.यजुःसंहिता, ३.सामसंहिता, ४.अथर्वसंहिता च ।

**ब्राह्मणभागे त्रयो भेदास्सन्ति-**

| 1. ब्राह्मणम् | 2. आरण्यकम् | 3. उपनिषद् |
|---|---|---|
| कर्मकाण्डम् | उपासनाकाण्डम् | ज्ञानकाण्डम् |

संस्कृतवाङ्मये प्रमाणभूताः वेदा एव । तत्रापि स्तुति-यज्ञ-सङ्गीत-स्वास्थ्यविषयक्रमेण ऋग्यजुः सामाथर्वाणः परमात्मनः निश्वासरूपाः वेदाः सर्वैः ज्ञायन्त एव । अतः वेदेषु विविधाः विषयाः वर्णिताः सन्ति ।

प्रकृतलघुशोधे "शुक्लयजुर्वेदे कृषिः ओषधयश्च" इत्यस्मिन् विषये कानिचनमौलिकतत्त्वानि संगृह्य तत्तन्मन्त्रेषु यन्निगूढतत्वं वर्तते, तस्यैव नूतनस्वरूपमुपस्थाप्यते मया । शुक्लयजुर्वेदे प्राचुर्येण यज्ञविषयकाः मन्त्राः प्राप्यन्ते इति चिन्तनम् अल्पश्रमाय कल्प्यते । अस्मिन् वेदे कृषिपरकाः ओषधिपरकाश्च मन्त्राः प्रत्यध्यायं नितरां प्राप्यन्ते । तत्रापि द्वादशाध्याये भूमिवन्दनां विधाय कृषेः महत्त्वम् अत्यन्तगौरवशालि प्रतिपादितमस्ति ।

**सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् ।धीरा देवेषु सुम्नया.१२- ६७ ॥**

**भावार्थः**- यज्ञकर्मणि चितिनिर्माणे अस्य मन्त्रस्य प्रयोगो भवति । चितेः दक्षिणभागे प्रत्यङ्मुखः अध्वर्युः प्रतिप्रस्थातृसंज्ञकेन ऋत्विजा षड्भिः, दशभिः, चतुर्विंशतिभिर्वा वृषभैः युज्यमानमौदुम्बरं हलं द्वाभ्यां मन्त्राभ्याम् अभिमन्त्रयते । धीराः धीमन्तः अग्निक्षेत्रे कुशलाः कवयः कृषिकर्माभिज्ञाः सीराः सीराणि हलानि युञ्जन्ति (वृषभैः योजयन्ति ।) युगाः युगानि पृथक् नाना वितन्वते = विस्तारयन्ति । किमर्थमिति जिज्ञासायाम्, देवेषु सुम्नया । सुम्नमिति सुखं नाम । देवानां सुम्नं कर्तुं युञ्जन्तीत्यर्थः ।

**निगूढतत्त्वम्** - कृषिप्रधानोऽयं भारतदेशः । अतः कृषिकर्मणि सर्वेषां भारतीयानां कर्मानुष्ठानम् (योगदानम्) अस्त्येव । अनेन मन्त्रेण कृषियज्ञकर्मणोः समानान्तर्यं दृश्यत एव । यथा - यज्ञकर्मणि द्रव्यं, देवता, त्यागः इत्येतेषां त्रयाणां मन्त्रः अभिधानं क्रियते तथा - कृषिकर्मण्यपि बीजं, क्षेत्रम्, क्षेत्रज्ञः इत्येतेषां त्रयाणां मन्त्ररभिधानं क्रियते ।

प्राचीनकाले कृषिकर्मणि मन्त्राणां कियान् प्रभावः आसीदिति अनेन मन्त्रेण स्पष्टं भवति । कृषिकर्मणः मन्त्रप्रभावं दृढीकरोति आचार्यः कात्यायनः । (कात्यायनश्रौतसूत्रम्)

**युनक्त सीरा वियुगा तनुध्वं कृते योनौ वपतेह बीजम् । गिरा च श्रुष्टिःसभराऽअसन्नो नेदीयऽइत्सृण्यः पक्वमेयात् ॥१२-६८॥**

**भावार्थः** – कृषकान्  प्रति सम्बोधनं वर्तते – हे कृषकाः यूयं हलानि युनक्त । ततः बीजानि वपत । यतः क्षेत्रमिदं हरितं स्यात् । अन्नतयः व्रीह्यादिकाः सभराः फलयुक्ताः यथा स्युः । दात्रम्प्रति पक्वम् औषधम् आगच्छेत् । अति– घनत्वादोषधीनां निकटतमं दात्रं भूमेश्च दात्रपूरं पक्वमोषधमागच्छेद् इति भावः ।

**निगूढतत्त्वम्** – कर्षतीति कृषकः । किं कर्षतीति समुदिते प्रश्ने रूढार्थत्त्वेन हलमिति क्षेत्रप्रसङ्गे उत्तरम्। रज्जुबन्धनादिना बलाच्चालनं कृषेरर्थः (संस्कृत-हिन्दीकोषः) स्वीक्रियते चेत् मनुष्योऽपि पशुः । कथं धर्मरज्ज्वा मनुष्याः अपि निबन्धाः (बाधिताः) सन्तः पुण्यक्षेत्राणि कृष्यन्ते । फलरसास्वादनाय बीजवपनकर्म आद्यसाधनम् । तच्च मन्त्रपुरस्सरं सिध्यति । अतः मन्त्राणां प्रभावः कृषिक्षेत्रे बीजवपने कियान् अस्तीति प्रायोगिकः पक्षः । सर्वे फलवतीः क्रियाः वाञ्छन्ति ।  अतः “फलप्रधानमाख्यातम् सत्त्वप्रधानानि नामानि” (वैयाकरण–भूषणसारः) इति वचनम् स्वयमेव चरितार्थं भवति ।

**शुनꣳ सुफाला विकृंषन्तु भूमिंꣳ शुनं कीनाशांऽअभियंन्तु वाहैः। शुनांसीरा हविषातोशंमाना सुपिप्पलाऽओषंधीः कर्त्तनास्मे ॥१२-६९॥**

**भावार्थः**– सुखेन शोभनफलाः लाङ्गलाग्रस्थिताः विकृषन्तु विविधं कृषन्तु भूमिम् । सुखेन च कीनाशाः हलिनः अभिगच्छन्तु वाहैः अनडुद्भिः सहिताः । तदा शुनासीराः वायुः आदित्याश्च अस्माकं हविषा तर्पितोदकेन नः अस्मभ्यं धान्यादिकम् ओषधीश्च सुपिप्पलाः सुफलाः कुरुतम् इति प्रार्थना ।

**निगूढतत्त्वम** – अस्मिन् मन्त्रे जडपदार्थेऽपि चेतनत्वव्यवहारः दृश्यते । तद्यथा – ओषधे त्रायस्व, स्वधिते मा हिंसीः, शृणोतु ग्रावाणः । (ऋग्वेदभाष्यम्) इत्यत्र भाष्यग्रन्थे चेतनत्वव्यवहारः दर्शितः । अत्र मन्त्रे भूमौ मृदुतायाः व्यवहारः कृतः । लाङ्गलाग्रस्थितस्य फालस्य तीक्ष्णलौहविशेषस्य (शङ्कोः) कर्षणकार्यं विद्यत एव । किन्तु तत्रापि भूमिः पृथिवी मातृपदवाच्या । माता भूमिः पुत्रोऽहं पृथिव्याः (अथर्ववेदः)। अतः मातुः कष्टं केनापि न सह्यते । पूजाविधौ भूमिः देवत्वेन गृह्यते । तत्रापि देवाय कष्टं कस्यापि नेष्टम् । षड्दोषशय्यानाम्, मांसैक–भोजिनाम्, सुरद्विषाम्, असुराणां वार्ता भिन्ना।

वस्तुतस्तु सर्वेषां जीवानां बीजगर्भं पृथिवी वर्तते, सा मातृस्वरूपा । उक्तञ्च – या देवी सर्वभूतेषु मातृरूपेण संस्थिता (दुर्गासप्तशती) । अत इयम् शक्तिषु आद्या, पञ्चभूतेषु, नवद्रव्येषु च आद्या, कौमुदीव आह्लादयति । अस्य मन्त्रस्य द्रष्टा कृषकान् संबोध्य इदं विज्ञापयति यत् कृषिकार्यं प्रेम्णा भवतु । पृथिवी माता, धरित्री, आश्रयरूपा जननी विद्यते । बालः क्वचित् पीडयति मातरम् किन्तु मुदा लालयति पुत्रं माता । कुपुत्रो जायेत क्वचिदपि कुमाता न भवति (इति शङ्कराचार्यः)  ।

**घृतेन सीता मधुंना समंज्यतां विश्वैर्देवैरनुंमता मरुद्भिंः। ऊर्जंस्वती पयंसा पिन्वंमानास्मान्सीते पयंसाभ्यावंवृत्स्व ॥ १२- ७० ॥**

**भावार्थः** - विश्वदेवैः मरुद्भिश्च सम्मानिताः हलपङ्क्तयः मधुरेण घृतेन आसिञ्चिताः स्युः । हे सीते! वृष्ट्या वर्षाजलेन परिषिक्त्वा घृतदुग्धादिभिः अस्मान् प्रति अभ्यावावृत्स्व अस्मदभिमुखमावृता भव । अस्माकमनुकूला भवेदित्यर्थः ।

**निगूढतत्त्वम्** - विश्वदेवः मरुच्च हलपङ्क्तेः इष्टदेवौ । इष्टदेवाभ्यां समनुज्ञाताः लब्धकृपाः हलपङ्क्तयः मधुरेण घृतेन अभिसिञ्चिताः स्युः । येन अस्माकं कृते तस्यां हलपङ्क्तौ उत्पत्स्यमानानि अन्नादि-बहुविधधान्यानि आयुष्कराणि सन्तः सुखप्रदानि स्युः । किञ्च अस्माकं गृहाणि पयोदधिघृतादिभिः परिपूर्णानि स्युः। अनेन स्पष्टीभवति यत् बीजवपनकाले प्रयुज्यमानमन्त्रस्य प्रभावः अन्नादिषु कथं प्रत्यक्षीभवतीति।

**लाङ्गलं पवीरवत्सुशेवꣳ सोमपित्सरु। तदुद्वपति गामविं प्रफर्व्यञ्च पीवरीं प्रस्थावद्रथवाहणम्॥१२-७१॥**

**भावार्थः** - लाङ्गलं पवीरवत् स्यात् । पविर्धारोच्यते । सोस्यास्तीति पवीरं फालः । अतः पवीरवत् लाङ्गलं फालसंयुक्तमिति भावः । कृषिसमृद्धावेव गवादिकं यजमानस्य सुलभमिति विवेकः । शेवमिति सुखं नाम, शोभन सुखकरं शोभनं शेवं यस्मात् । तथा सोमपित्सरु सोमं पिबतीति सोमपाः यजमानः, तस्मिन् सोमपि यजमाननिमित्तं भूमिं खनतीति सोमपित्सरु । अथवा यजमानस्य पापं नाशयतीति सोमपित्सरु । तदुत्पन्नां गामविं प्रफर्व्यं = गतिशीलां, पीवरीं, स्थूलां, पुष्टाङ्गीञ्च यथा स्युः ।

**निगूढतत्त्वम्** - मन्त्रेऽस्मिन् प्रार्थना विद्यते यत् गवादीनां पशूनां यत्पोषकतत्त्वं विद्यते तत् लाङ्गादेव सम्भवति । अतः कृषिकर्मणि वक्रतुण्डवत् प्रार्थ्यते लाङ्गलम् (हलः) । गवादीनां पशूनां संरक्षणार्थं धान्यादीनां, तृणादीनां वा घासानाम् आवश्यकता नितान्तम् अपेक्षते तत् क्षेत्रादेव सम्भवति, अतः सर्वेषां जननी कृषिः वर्तते ।

**अथौषधिनिरूपणम्** - कृषिनिरूपणानन्तरम् ओषधिनिरूपणं क्रियते । 'शरीरं व्याधिमन्दिरम्' अतः रोगाश्रयमिदं शरीरं सर्वैः संरक्षत एव । त्रिविधदुःखानाम् आत्यन्तिकनिवृत्यनन्तरं क्रियाशीलो जीवः नूतनकार्य-सम्पादनार्थं स्वस्थशरीरं चिन्तयति । तदनन्तरमेव 'शरीरमाद्यं खलु धर्मसाधनम्' इति तस्यात्मनि ज्ञानमुत्पद्यते। अनेन दृष्टान्तेन इदं सिद्ध्यति धर्मसम्पादनाय स्वस्थशरीरस्य महती आवश्यकता वर्तते । ततः स्वस्थशरीरस्य चिरकालं यावत् स्वास्थ्यसंरक्षणं कल्प्यते । अत्रैव रोगनिवारणार्थं विविधानाम् ओषधीनां सेवनं क्रियते, तत्सर्वं शुक्लयजुर्वेदस्य द्वादशाध्याये निरूपितं वर्तते ।

**याऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा। मनैनु बभ्रूणामहꣳ शतं धामानि सप्त च॥१२-७५॥**

**भावार्थः** - पुरा सृष्ट्यादौ या ओषधीः ओषधयः पूर्वाः प्रथमा भाविनीभ्यः ओषधीभ्यः आद्याः जाताः । किमर्थमिति जिज्ञासायाम् उच्यते - ऋतवः ओषधियुताः कर्त्तव्याः एतदर्थम् । बभ्रूणां जगज्जननभरणसमर्थानां पाकेन

पिङ्गल– वर्णानां वा तासामोषधीनां शतं सप्त च धामानि अहं मनै नु मन्ये = जाने । शतं धामानि वर्षात्मकानि शिरः स्थितानि मुखदृङ्नासाख्यानि सप्त स्थानानि भवन्ति ।

**निगूढतत्त्वम्** – देवेभ्यः प्राक् याः ओषधयः समुत्पन्नाः ताः मत्शरीरं स्वस्थं कुर्वन्तु । अपि च शतवर्ष–पर्यन्तमहं सुखेन जीवेयम् । उक्तञ्च – शतपथब्राह्मणे शतायुर्वै पुरुषः इति ।

**ओषधीः प्रतिमोदध्वं पुष्पवतीः प्रसूवरीः । अश्वाऽइव सजित्वरीर्वीरुधः पारयिष्ण्वः ॥१२-७७॥**

**भावार्थः** – हे ओषधयः प्रतिमोदध्वं हृष्यत । पुष्पवतीः पुष्पवत्यः, प्रसूवरीः प्रसववत्यश्च, अश्वा इव संग्राम्याः सजित्वरीः सह जयनशीलाः भूत्वा वीरुधः विविधं व्याधिं रुधन्तीति वीरुधः, पारयिष्णवः पारणशीलाश्च भवत । पारयन्ति फलपाकान्तवत्त्वं परित्यज्य बहुकालं कर्मपरायणशीलाः भवत ।

**निगूढतत्त्वम्** – ओषधीः प्रति प्रार्थना वर्तते, हे ओषधयः ! यूयं पुष्पवत्यः, फलवत्यः, प्रसववत्यः, सजित्वरीवत्यश्च भवत । अतो हि इयं धरा सपुष्पा, सफला, सप्रसुववरा, सजया, सविश्ववारा सर्वेभ्यः रोचत एव। 'सा प्रथमा संस्कृतिर्विश्ववारा' (शु.य.वे ७-१४)। एतादृश्यां धरायाम् उत्पन्नाः ओषधयः जीवानां त्रिविधदुःखानाम् आत्यन्तिकनिवारणं कारयित्वा निःश्रेयसफलं दापयन्ति इति विश्वासः ।

भक्तिमार्गेऽपि पत्रपुष्पफलादीनि भक्त्या देवाय समर्प्यन्ते, फलप्राप्तये । तानि ओषधरूपाण्येव ।

**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । श्रीमद्भगवद्गीता ॥**

**उपसंहारः** अस्माकं भारतीयासंस्कृतिः सभ्यता, परम्परा वा भवतु वैदिककालादेव सततं ऋषिचिन्तनानुकूला, अक्षुण्णा च वर्तते । अद्यत्वे कलिकराले भयाक्रान्तकारणात् क्वचित् वयं स्वशाखात् दूरे स्याम किन्तु मानसिक-वैचारिक-काल्पनिक-दृष्ट्या वयं वेदानुसारमेव कार्याणि सम्पादयामः । अस्माभिः संस्कारा उत्सवाः सामाजिककार्याणि च तथैव परिपाल्यन्ते यथा शास्त्रमुपदिशति । वस्तुतस्तुः भारतीयवाङ्मये सर्वविधं ज्ञानं वर्तते एव । यथा – आचार-व्यवहार-नियमाः, कला, राजनीतिशास्त्रम्, खगालशास्त्रम्, गणितशास्त्रम्, अस्त्रशस्त्र-चालनविद्या, यानचालनविद्या, शिल्पकला, कृषिविद्या, ओषधिविद्या, अध्यात्मविद्याश्चेत्यादिविषयाः यथाशास्त्रं वर्णिताः वर्तन्ते । सर्वेषां सम्यक् ज्ञानाय बोधाय आत्मसाक्षात् करणाय च साधनायाः आवश्यकता वर्तते । किन्तु अद्यतनकालः यन्त्राधारितः वर्तते । यन्त्रेणैव परां गतिं प्राप्नोमि इति जनानां मनसि उत्कंठारूपि लक्ष्यं वर्तते । सम्यक् विचारयामश्चेत् "आत्मविद्यायाः अधिकं" किमपि वस्तु नास्ति । मानवः लौकिकसाधनैः लौकिकपदं प्राप्तुं शक्नोति, न पारलौकिकम् ।

मदीये लघुशोधे मयेदं विचारितं यत् अस्माकं वेदेषु निहितं ज्ञानं कृषिक्षेत्रे, ओषधिक्षेत्र च कथं उपादेयं वर्तते इति । कृषिक्षेत्रे कृषकाः कृषिकार्याणि कुर्वन्तः तत्रैव परमेश्वेरस्य पूजां, वदनां, स्तुतिञ्च कुर्वन्ति । ते कृषकाः

हल-लाङ्गल-फालादिभि: क्षेत्राणि कर्षयन्त: बीजानि वपन्ति । तत्र नूतन-उत्पद्यमानस्य बीजस्य कामनाञ्च कुर्वन्ति। क्षेत्रं प्रति मातृत्वभावं सम्पादयन्ति । स्वपरिश्रमेण यत् पाप्यते तदेव ईश्वरप्रसाद: इति मत्वा स्वपरिवारेभ्य: जनेभ्यश्च प्रददति । अस्मिन् विधौ साक्षात् वेदवचनमेव अनुभूयते । यथा -"वसुधैव कुटुम्बकं इति"

कृषिविषयस्य प्रासंगिकताविषये महामुनिना पराशरेणोक्तम् -

**तं प्रवक्ष्याम्यहं पूर्वं परशरावचो यथा । षट् कर्मनिरतो विप्रः कृषिकर्म च कारयेत् ॥ पा. स्मृति.2-2**

**कृषिर्धन्या कृषिर्मेध्या जन्तूनां जीवनं कृषिः । हिंसादिदोषयुक्तोऽपि मुच्यतेऽतिथिपूजनात् ॥ कृषिपाराशरः.**

एवमेव ओषधिविषयेऽपि वेदेषु ऋषीणां गम्भीरचिन्तनं वर्तते । ता: ओषधय: अस्माकं शरीरे ये विद्यमाना: रोगा: सन्ति । तान् अपाकुर्वन्ति । विशेषत: कर्मकाण्ड एषां वृक्षाणां, वनस्पतीनां वा प्रयोग: भवति ते सर्वेपि ओषधिपरका: एव सन्ति । यथा - पञ्चपल्लवा: सर्वोषधय:, नवग्रहाणां समिध:, यज्ञीयवृक्षा: इत्यादय: । एते सर्वेऽपि ओषधौ उपनिबद्धा: भवन्ति । मानव: स्वस्थशरीरेणैव सर्वविधानि कार्याणि सम्पादयितुं शक्नोति । अत: अस्माकं वेदेषु ऋषिणां तादृश: भाव: कल्पित: येन रोगी शीघ्रमेव मुक्तो भवेत् । ओषधिनिर्माणकाले वैद्य: मन्त्रस्मरणपुरस्सरं हितभावं च मनसि निधाय रोगिभ्य: औषयं प्रददति तदा निश्चप्रचं स मुक्तो भवति, नास्त्यत्र लेशमात्रं संशय: । **शतायुषः पुत्रप्रौत्रान् वृणीष्व बहून् पशून् हस्तिहिरण्यमश्वान् ।**

**भूमेर्महदायतनं वृणीष्व स्वयं च जीव शरदो यावदिच्छदि ॥**

**कठोपनिषद्**

**सन्दर्भग्रन्थ:**

1. शुक्लयजुर्वेदसंहिता ।
2. अथर्ववेदसंहिता ।
3. आयुवद: ।
4. निरुक्तम् ।
5. माध्यन्दिन-प्रातिशाख्यम् ।
6. याज्ञवल्क्य -शिक्षा ।
7. याज्ञवल्क्य -स्मृति: ।
8. मनु-स्मृति: ।
9. शतपथब्राह्मणम् ।
10. कात्यायन-श्रौतसूत्रम् ।

11. याज्ञिक-रत्नम् ।
12. यज्ञ-मीमांसा ।
13. ईशादि नव-उपनिषदः।
14. वैदिक-साहित्येतिहासः ।
15. श्रीमद्‌भगवद्‌गीता ।
16. मन्त्रपुष्पम् ।

**सहायकाः कोषग्रन्थाः**

1. अमरकाशः ।
2. संस्कृत-हिन्दीकोशः ।
3. वाचस्पत्यम् ।
4. शब्दकल्पद्रुमः ।
5. निघण्टुः ।
6. पाणिनि-सूत्राष्टाध्यायी ।

**शोधच्छात्रः**
**केन्द्रोयसंस्कृतविश्वविद्यालयः**
**क जे. सोमैयापरिसरः**
**विद्याविहार, मुम्बई ।**



## लक्ष्यम्

- संस्कृतपरम्पराश्रितस्य नवज्ञानराशेः अवाप्तये अपेक्षितायाः वेदिकायाः सर्जनम् ।
- सम्बद्धक्षेत्रेषु सर्वेषु भारतीयज्ञानप्रणाल्याः प्रोन्नयनम् ।
- मुख्यधारायां संस्कृतमाध्यमेन शिक्षणाय व्यवस्थापनम् ।
- संस्कृतबन्धुत्वस्य आधुनिकजगता सह योजनम् ।
- बहुविषयकानुसन्धानस्य जीवत्क्षेत्ररूपेण संस्कृतस्य ख्यापनम् ।
- संस्कृतज्ञानकेन्द्रत्वेन केन्द्रीयसंस्कृतविश्वविद्यालयस्य विकाससम्पादनम् ।

## दृष्टिः

वैश्विकस्तरे भारतस्य गरिमाणं ख्यापयितुं विश्वगुरुत्वेन भारतं प्रतिष्ठापयितुं च समस्त-विश्वस्तरीयविश्वविद्यालयरूपेण केन्द्रीयसंस्कृतविश्वविद्यालयस्य परिवर्धनम् ।

## उद्देश्यानि

- यथोचितं संस्कृतभाषायाः तत्सम्बद्धाधिगमशाखानां संवर्धनाय अनुदेशात्मक-अनुसन्धानात्मक-विस्तारकसौकर्याणि प्रकल्प्य ज्ञानस्य आधुनिकीकरणं प्रसारश्च ।
- स्वीये शैक्षिककार्यक्रमे एकीकृतपाठ्यक्रमस्य मानविक्याः सामाजिकविज्ञानस्य विज्ञानस्य च विशिष्टस्थानप्रदानम् ।
- शिक्षणाधिगमप्रक्रियायाम् आन्तरानुशासनाध्ययने अनुसन्धाने च नवाचाराणां प्रोत्साहनाय उचितोपायानामन्वेषणम् ।
- संस्कृते पारम्परिकविषयेषु च समग्रविकासार्थं संवर्धनार्थं संरक्षणार्थम् अनुसन्धानार्थं च मानवीयशक्त्यै शिक्षणदानं प्रशिक्षणप्रदानं च ।